काव्यानि' इति वदतां पण्डितप्रकाण्डानां कालस्तु समाप्तकल्पः, यतो विशिष्टशास्त्रनैपुण्यं समासादयन्तो जना यत्र कुत्रापि कतिचित्का एव।

अधुनातने काले वैभवस्य परां कोटिमधिरूढायामपि सपत्नीस्थानीयाङ्ग्लभाषाया, सुरसरस्वतीसेवासंसक्ताः केचन विद्वद्वरेण्याः प्रवक्तृत्व-ग्रन्थप्रकाशनादिभिर्विविधोपायैः सुरभारत्याः सार्वत्रिकप्रचारार्थं भारतीय-संस्कृतिरक्षार्थं च प्रयतमानाः संलक्ष्यन्ते। किन्तु गीर्वाणभारत्याः सार्वत्रिक-प्रचारः सम्यगध्ययनाध्यापनाधीन इत्यपि न परोक्षं प्रेक्षावताम्। अक्लेश-पुरस्सरं रसोत्पादकमध्यापनमेवाध्ययनसौकर्याय गुणनिकया ज्ञानविवृद्धये च भवतीति विद्यते हेतुहेतुमद्भावोऽध्ययनाध्यापनयोः। सम्प्रति भारतवर्षे बालानां संस्कृताध्यापनार्थं संस्कृतपाठशालासु मातृभाषोपयोगपूर्वकमुत्तरोत्तरं संस्कृतभाषाव्यवहारं प्रोत्साहयन्ती प्राचीनपण्डितपद्धतिरनुस्रियमाणा वर्तते, आङ्ग्लपाठशालासु चाङ्ग्लभाषाव्यवहारप्रमुखा व्याकरणाङ्ग्लानुवादप्रधाना भाण्डारकरपद्धतिरित्येतत्पद्धतिद्वयं प्रायेण प्रचारबहुलं परिदृश्यते। आदितः संस्कृतभाषाव्यवहारसौकर्यसम्पादयित्री तृतीया संवादपद्धतिस्तु पर्याप्तप्रयोगा-भावान्निपुणाध्यापकविरहाच्च विरलत्वेनैवोपयुज्यते। आङ्ग्लपाठशालासु तु संस्कृताध्ययनस्य प्रायो दोषसङ्कुलत्वादरुचिकरत्वाच्च तत्रत्याश्छात्राः संस्कृता-ध्ययनं विहायान्यभाषाभ्यासमवलम्बन्ते। अतश्चाङ्ग्लविद्यालयेषु संस्कृतभाषा प्रतिदिनमसितपक्षेन्दुकलेव क्षीणत्वमुपयातेत्यहो दौर्भाग्यं सुरभारत्याः! प्रचलितबहुविधपद्धतिपरीक्षणपूर्वकं पूर्वतनानां गुणानङ्गीकृत्यैव नूतनसरण्य-नुसरणं श्रेय इति निपुणं विचार्य, संस्कृताध्ययनाध्यापनदुरवस्थाया दूरी-करणाय भारतवर्षीयविविधविदुषां समुचिताध्यापनपद्धतिविषयेऽभिमतान्य-भिज्ञातुमना मया नानाप्रयोगसमीक्षामूलिका 'संस्कृताध्यापनप्रश्नावलिः' वर्षषट्कात्प्रागुपनिबद्धा, या भिन्नप्रान्तस्थानां विदुषां शतकपञ्चकस्य सविधे प्रत्युत्तरप्राप्तये सप्रश्रयाभ्यर्थनापुरस्सरं प्रेषिता, संस्कृतपत्रिकासु च प्रका-शिताऽऽसीत्। तदानीं गीर्वाणवाग्वद्धादराणां विदुषां त्रयोदशभिः संस्कृत-भाषया, अष्टभिर्महाराष्ट्रभाषया, त्रिभिश्चाङ्ग्लभाषयेति केवलं चतुर्विंश-तिसङ्ख्याकैर्हस्तलेखरूपेण सानुग्रहमुत्तराणि प्रेषितानि मत्सविधे। संस्कृतो-त्तराणि प्रेषयतां विदुषामेकः संयुक्तप्रान्तीयः, एको गुर्जरदेशीयः, द्वौ मद्र-विभागस्थौ, नव च महाराष्ट्रियाः सन्ति। उपरितनविदुषां प्रतिप्रश्नं

विविधोत्तराणि संस्कृताध्यापनपद्धतिजिज्ञासूनां सम्यग्बोधाय समुत्कृष्टपद्धतिगवेषणायै च मत्प्रश्नैः साकं 'बेळगाव'नगरस्थायां 'मधुरवाण्यां' अयोध्यास्थ-साप्ताहिक-'संस्कृते' च प्रकाशितपूर्वाण्येव । सत्यवसरे सकलान्यपि प्रत्युत्तराणि ग्रन्थरूपेण पृथक्तया प्रकाश्येरन्नेव ।

संस्कृतभाषाजिज्ञासूनामाङ्ग्लविद्यालयच्छात्राणामध्यापने ये विवाद्याः प्रश्नाः समुद्भवन्ति तानुद्दिश्य मुद्रितपूर्वैवेयं 'संस्कृताध्यापनप्रश्नावलिः' संस्कृतानुरागिणां समीक्षायै सम्यङ्निर्णयाय चात्र पुनरपि प्रकाश्यते । अन्यच्चेयं प्रश्नावलिरत्रत्यप्रबन्धोपन्यासरूपैव, यतस्तदन्तर्गतानां केषाञ्चित्प्रश्नानां प्रत्युत्तराण्यपि लभ्येरन्नत्रोपस्थापितेषु प्रबन्धेषु। अधस्तना प्रश्नावलिरन्यानपि विदुषः प्रत्युत्तरलेखनाय प्रेरयेत्, संस्कृतानुशीलनविषये युक्तायुक्तनिर्णायको विविधप्रबन्धगतो मदीयविमर्शश्च सरससरलाध्यापनरीतिगवेषणायोपयुक्ततरो विबुधजनसम्मतश्च भवेदिति बलवदाशास्यते ।

## सामान्यप्रश्नाः ।

१ (अ) बालानां कृते या संस्कृताध्यापनपद्धतिः पुरातनकालादारभ्याद्य यावद् गीर्वाणभाषापण्डितैः समाश्रिता समाश्रीयते च, तस्याः स्वरूपं कीदृक्, किं च तद्गतविषयाणामानुपूर्व्यम् ? ।

(आ) उदीच्यभारतीयानां दाक्षिणात्यानां च पद्धत्योः के भेदसाम्ये ? ।

(इ) गीर्वाणभाषापण्डितानामध्यापनप्रणाल्या के गुणा दोषा वा ? सा प्रणाल्याङ्ग्लपाठशालास्वनुस्रियमाणा चेत् किं परिवर्तनमिष्यते ? ।

२ त्रिदिवं गतानां डॉ. भाण्डारकरमहोदयानां संस्कृताध्यापनपरिपाटी बालानां सुखबोधाय कियन्मात्रं गुणावहा ? ।

३ इदानीं पाश्चात्यदेशेषु कैश्चिदध्यापकैः संस्कृततुल्यानां 'ग्रीक्-लॅटिन्' इत्येतासां प्रविरलप्रचारभाषाणामध्यापने तां तामेव भाषामाश्रित्य संवादपद्धतिः प्रयुज्यते । यस्याः कस्या अपि भाषाया अध्ययनाध्यापनविषये तदधिष्ठानभूतानि कानिचिद् व्यापकतत्त्वानि समवलम्ब्यमानानि वर्तन्त इति सन्दृश्य तैस्तानि बालमनोविज्ञानानुसारेण (Child psychology) समुद्भावितानि सङ्कलीकृतानि च । तेषां तत्त्वानां तस्याः संवादपद्धत्याश्च (Conversational method) संस्कृताध्यापने कियानंशो ग्राह्यः ? ।

४ आङ्ग्लतृतीयश्रेणीतः संस्कृताध्ययनारम्भे क्रियमाणे कः प्रत्यवायः ? तथा कृते चोपक्रमाध्यापनं कया रीत्या कार्यम् ?।

## व्याकरणम् ।

५ (अ) किं भाषामुखेन व्याकरणं पाठनीयमुत व्याकरणमुखेन भाषा ? कस्मात् कारणाच्च ?।

(आ) सामान्यच्छात्राणां संस्कृतवाङ्मयप्रवेशाय कियन्मात्रं व्याकरणज्ञानमपेक्ष्यते, के व्याकरणविभागाश्चात्यावश्यकाः ?।

(इ) सौकर्योपयोगदृष्ट्या व्याकरणविभागानामध्यापने कोऽनुक्रमः समीचीनः स्यात् ?।

(ई) शब्दरूपावलिसमासचक्रयोः प्रस्तावः कदा कार्यः ?।

(उ) अध्यापकेन सुकोमलमतिभिश्छात्रैः किं व्याकरणनियमानुरोधेन रूपसिद्धिः कारयितव्या, तैः पुस्तकस्थानि सिद्धरूपाण्येव कण्ठे करणीयानि वा ?।

(ऊ) संस्कृताध्ययनाय मातृभाषाव्याकरणज्ञानस्य कियत्यपेक्षा ?।

## अनुवादः ।

६ (अ) अपि 'मातृभाषयानुवाद' इति संस्कृतभाषाध्यापनस्यैकमेव साधनम् ? अन्यान्यपि साधनानि स्युश्चेत्कानि तानि ?।

(आ) संस्कृतस्य मातृभाषयानुवादः केषु केषु स्थलेषु हितमावहेत् ?।

(इ) मातृभाषानुवादस्य का पद्धतिः श्रेयसी, संस्कृतशब्दानुसारिणी मातृभाषासरण्यनुसारिणी वा ? उभयोरप्युपयोगो यथासम्भवं कुत्र कथं चेष्टः ?।

(ई) मातृभाषाया आङ्ग्लभाषाया वा संस्कृतेऽनुवादः सामान्यच्छात्राणां कियत्परिमाणेनोपकारकः ? उपकारकः स्याच्चेत्स आङ्ग्लविद्यालयेषु कतमस्यां श्रेण्यामारब्धव्यः कया रीत्या चाध्यापयितव्यः ?।

## वाङ्मयाभ्यासः ।

७ (अ) उपक्रमावस्थायां किंस्वरूपं वाङ्मयं छात्रैरभ्यसनीयम्, किं विश्लिष्टवाक्यानि ( Disconnected sentences ) उत कथासंवादवर्णनात्मकाः संश्लिष्टपरिच्छेदाः ( Connected passages ) ? किमर्थं च ?।

(आ) संस्कृतवाङ्मयं केन भाषासाधनेन ( Medium ) अध्यापयितव्यम्, संस्कृतभाषया मातृभाषया वा ?

(इ) वाङ्मयाध्यापनेऽध्यापकेन (१) प्रश्नप्रणाली ( Questioning ), (२) अनुवादप्रणाली ( Translation ), (३) कथनप्रणाली ( Telling ) चेत्येताः कुत्र कथं वा प्रयोज्याः ? प्रश्नकथनार्थविवरणानि कतरया भाषया कार्याणि, मातृभाषया संस्कृतभाषया वा ? किमर्थं च ? उभयभाषोपयोगः कर्तव्यश्चेत्कुत्र संस्कृतं प्रयोज्यं कुत्र च मातृभाषा ?।

(ई) कथाकाव्यसंवादवर्णनादीनामध्यापनं प्रत्येकं कया विभिन्नपरिपाट्या कार्यम् ?।

(उ) वाङ्मयाध्यापने प्रायः कः कल्पोऽनुसर्तव्योऽध्यापकेन, कया दृष्टया च ?।

(ऊ) गीर्वाणवाङ्मयगताः पर्यायशब्दाः ( Synonyms ), भिन्नार्थशब्दाः ( Homonyms ), वाक्सम्प्रदायाश्च ( Idioms ) कया पद्धत्याध्येतव्याः ? अमरकोशप्रस्तावः कदा कथं च कार्यः ?।

## पाठ्यपुस्तकानि।

८ (अ) बालानां सुखबोधाय समीचीनानि संस्कृतपाठ्यपुस्तकानि कृच्छ्रेणैव लभ्यन्ते। नूतनेषु विरचयितव्येषु कानि तत्त्वानि लेखकैरात्मनः पुरः संस्थाप्यानि ? पुस्तकगतपाठानां क्रमविषये स्थूलतया किं तत्त्वमाश्रयणीयम् ?।

(आ) बालानां पाठ्यपुस्तकेषु कीदृशी भाषा के च विषया उपयोक्तव्याः ? अभिजातभाषायाः ( Classical language ) प्रस्तावस्तेषु कियन्मात्रं शक्यः ? अभिजातग्रन्थानामभ्यासः कतमस्यां श्रेण्यां कतमे वयसि वा साध्यः ?।

(इ) संस्कृतवाङ्मयस्थाः कथाकाव्यनाटकादयो विविधप्रकारा बालानां पाठ्यपुस्तकेषु श्रेण्यनुरोधेन यथाक्रमं कथं संनिवेश्याः ?।

(ई) पाठ्यपुस्तकेषु व्याकरणविभागाः कथं संविभाज्याः कया रीत्या च लेखनीयाः ?।

(उ) आङ्ग्लभाषायां सूक्ष्माभ्यासार्हेभ्यः पाठ्यपुस्तकेभ्योऽतिरिक्तानि बालोचितानि बहूनि स्थूलवाचनपुस्तकानि (Books for Rapid Reading) लभ्यन्ते। तादृशेषु संस्कृतभाषायां लेखितव्येषु कानि तत्त्वानि लेखकैरनुसर्तव्यानि?

## सङ्कीर्णप्रश्नाः ।

९ 'अल्पारम्भः क्षेमकरः' इति न्यायात् कथावर्णनपत्रादिपरिच्छेदरूपेण प्रबन्धलेखनं छात्राणां कियद्धिताय भवेत् ? अयं विषय आङ्ग्लविद्यालयशिक्षाप्रणाल्यां कथं संनिवेश्यः कया रीत्या चाध्याप्यः ? ।

१० वाङ्मयव्याकरणयोः के भागाः कण्ठस्थाः करणीया अकरणीया वा ? पाणिनीयसूत्राणामध्ययनं यथाप्रसङ्गमाङ्ग्लपाठशालासु कियन्मात्रं साध्यम् ? ।

११ आङ्ग्लविद्यालयेषु संस्कृतभाषायाः पाठ्यक्रमनिर्धारणे ( Curriculum construction ) का दृष्टिः समवलम्बनीया ? केषु विभागेषु च पाठ्यक्रमपरिवर्तनमिष्टम् ? ।

१२ लौकिककार्येषु संस्कृतज्ञानां संस्कृतवाग्व्यवहारः सुसाध्यो दुःसाध्यो वा ? दुःसाध्यश्चेत्केन कारणेन ? सुसाध्यश्चेत् कैरुपायैः ? ।

१३ आङ्ग्लमहाविद्यालयेषु प्रधानत्वेन संस्कृतमधीत्यापि विश्वविद्यालयोपाधिधारिणोऽध्यापका अध्यापनेऽन्यत्र वा संस्कृतभाषया सौकर्येण संभाषणादिव्यवहारं कर्तुं न पारयन्ति । तेषामध्यापने संस्कृतभाषाव्यवहार इष्टोऽनिष्टो वा ?। इष्टश्चेदध्यापकैर्भाषाव्यवहारनैपुण्यं कथं सम्पाद्यम् ? ।

१४ संस्कृतशिक्षकाणां संस्कृतवाग्व्यवहारक्षमत्वाय महाविद्यालयीने संस्कृतपाठ्यक्रमे किं परिवर्तनमिष्यते ? ।

---

## संस्कृताध्ययनदुरवस्था तद्दूरीकरणोपायाश्च ।

कतिपयवत्सरेभ्यः प्राग्भारतवर्षस्य नानादिग्भागेषु प्राचुर्येण समुपालभ्यन्त गीर्वाणभाषाप्रवीणाः पण्डितप्रकाण्डा ये सुबोधमधुरया गीर्वाणवाण्या संलपन्तः श्रोत्रसुखमुत्पादयन्ति स्म । नानाशास्त्रपारावारीणानां तेषां तेषां पूर्वतनपण्डितप्रवराणां गीर्वाणवाग्विलासं स्मारं स्मारमद्यापि सुखदो-

लामध्यारोहति चेतः । प्राक्कालीना परिपाटी त्वियं यद्दाक्षिणात्याः पण्डिता उदीच्यभारतं गत्वा तत्रात्मनोऽगाधपाण्डित्येन प्रथितयशसः सञ्जाताः । स्वकीयसुरसरस्वतीनैपुण्येन प्रगाढशास्त्रावगाहनेन च वाराणसीमद्याप्यलङ्कुर्वाणाः सन्ति दाक्षिणात्याः पण्डितप्रवरा इति महद्गौरवास्पदम् । दक्षिणभारते त्वधुना का दुर्गतिर्दृष्टिसरणिमायाति ? अत्र न केवलं हीनत्वमापन्नाऽस्मदीया निसर्गमधुरा देवभारती, अपि तु केचनाधुनिकपण्डितम्मन्याः प्रलपन्ति यद् " इयं देववाक् पञ्चत्वं गता । आधुनिकभाषाविचाराणामपेक्षया सा न्यूनतमा, निकृष्टतमा च । किं प्रयोजनमस्मदीयमेतादृश्या मृतभाषया ? " इति । एतत्प्रलपितश्रवणेन दूयेत कस्यापि गीर्वाणवागनुरागिणश्चेतः । सौभाग्यस्यायं विषयो यदेतस्मिन्नप्यननुकूले काले कैश्चिदङ्गुलिमेयैः पण्डितैरद्यावधि दक्षिणभारते गीर्वाणभाषागतविविधशास्त्राणां पठनपाठनयोः परम्पराऽनाडम्बरपूर्वकमविच्छिन्नत्वेन प्रचालिता । किन्तु सुरसरस्वतीशेवधिरूपास्ते ते प्राचीनपण्डिताः प्रायः प्रतिदिनं कालवशत्वमुपयान्ति, ये च विरलत्वेनोपलभ्यमानास्ते वयसश्चरम भागं प्राप्ता इति हेतोः संस्कृताध्ययनपरम्परा छिन्नप्राया संवृत्तेत्यहो दौर्भाग्यं विबुधवाण्याः । एतत्कारणश्रेणिवशादेवेयं सुरभारती मुमूर्षुत्वमापन्ना, एषा च तस्या दुरवस्था " अहो कष्टं सापि प्रतिदिनमधोऽधः प्रविशति " इति भर्तृहरिवचनं स्मारयति । अद्यत्व आङ्ग्लभाषाध्ययनस्यापरिहार्यापेक्षा वर्तत इति विवादातीतमेव । किन्तु संस्कृतभारत्याः समुचिताध्ययनेनापि लब्धावकाशेन भाव्यं, यतो भारतीयसंस्कृतेः परित्राणं संस्कृतभाषासमुद्धाराधिष्ठितमेव ।

उदीच्यभारते संस्कृताध्ययनविषये यावान्समादरो दृश्यते न तावान्मोहमयीविभागे । उदीच्यभारते प्रतिमण्डलं संस्कृतपरीक्षासमितिभिः प्राच्यशास्त्रप्रावीण्यलब्धये विविधपरीक्षा विहिताः सन्ति । निर्धनत्वादाङ्ग्लभाषामध्येतुमक्षमाः पादोनलक्षसङ्ख्याकाश्छात्राः प्रतिवर्षमेताः परीक्षाः समुत्तरन्ति । किन्त्वेतादृशे संस्कृताध्ययने छात्राणां न समधिकं प्रलोभनं दृश्येत, यावत्परीक्षोत्तीर्णानां राजशासनद्वारा जीविकोपाया नोपकल्पिताः स्युः । आङ्ग्लोपपदधारिभिर्यावती वृत्तिर्लभ्यते तावत्यपि संस्कृतपण्डितैर्नाधिगम्यत इति महद्विषादस्थानम् । उदीच्यभारते गीर्वाणभाषाभिवृद्ध्यर्थमन्येऽपि विविधोपायाश्चिन्त्यन्ते । तत्र संस्कृतभाषामात्रव्यवहारशरणैः पण्डितप्रवरैः

सुरसरस्वतीसंवर्धनोपायभूतानि संमेलनानि विधीयन्ते विविधा नियतकालिक-पत्रिकाश्च प्रकाश्यन्ते। केचिदमन्दोत्साहाः पण्डिता गीर्वाणभाषाया राष्ट्र-भाषात्वमापादयितुमपि प्रयतन्ते, येषां समुद्यमं क्षाराम्बुधेर्मधुबिन्दुनिपातनेन माधुर्यापादनमिवासुकरं मन्यमानाः केचिदन्येऽपि सन्ति।

मोहमयीविभागे न त्वेतादृशी स्थितिः। अत्र संस्कृतपाठशालानां संस्कृतपरीक्षाणां च वैरल्यादाङ्ग्लपाठशालामहाविद्यालयेषु गैर्वाण्या यज्ज्ञा-नमधिगम्यते तत्तु गाधोदककल्पं, यतः संस्कृतविषयः प्राय आङ्ग्लमहा-विद्यालयेष्वाङ्ग्लभाषाद्वारैवाधीयतेऽध्याप्यते च। संस्कृतमधिकृत्य विश्व-विद्यालयपरीक्षास्वाङ्ग्लभाषायां प्रश्नाः पृच्छ्यन्ते, तेषां प्रत्युत्तराणि चाङ्ग्ल-भाषयैव प्रायो लिख्यन्ते छात्रैः। संस्कृतानुवादार्थं परीक्षासु दीयमान आङ्ग्लभाषापरिच्छेदो विरलैरेवानूद्यते संस्कृते। विश्वविद्यालयपरीक्षासु संस्कृतप्रबन्धलेखनविषयकाणां प्रश्नानामत्यन्ताभाव एव। संस्कृतनैपुण्यदर्शकं विश्वविद्यालयोपाधिं लभमानानां छात्राणां स्तोकांशेनापि पाणिनीयपरिभाषा-परिचयो न भवति। कैश्चिच्छात्रैः पाठ्यत्वेन निर्दिष्टाः संस्कृतमूलग्रन्था अपि नाभ्यस्यन्ते, किमुत तत्सम्बन्धिनः संस्कृतटीकाग्रन्थाः। संस्कृतमूल-ग्रन्थाध्ययनं विनाऽऽङ्ग्लभाषानिष्ठानां ग्रन्थानुवादटिप्पण्यादीनां वाचन-मात्रेण ते सम्यक्तयोत्तीर्णा भवन्ति। येषां चाङ्ग्लभाषायां प्रावीण्यं स्यात्त एव संस्कृतपरीक्षासु समधिकगुणाँल्लब्धुमीशते। संस्कृतवर्णोच्चारानजानाना एतादृशाश्छात्राः संस्कृतगद्यपद्यपरिच्छेदान् समीचीनतया प्रोच्चैर्वाचयितुं न प्रभवन्ति, यतस्तेषां सुविशदवर्णोच्चारपूर्वको वाचनाभ्यास आङ्ग्लपाठ-शालामहाविद्यालयेषु कदाचिदेव भवति। एतादृश्या पद्धत्या संस्कृतनै-पुण्योपाधिं लभमाना जना यदाऽऽङ्ग्लपाठशालासु गीर्वाणभाषाशिक्षकपदे नियुज्यन्ते तदा तेषामध्यापने कियती रतिः को वा गुणः स्यात्? सम्य-ग्ज्ञानापेक्षयाऽन्धपरम्परान्यायेन यया कयाप्यध्यापनरीत्या छात्राणां परीक्षा-समुत्तरणमेवादिमं प्रयोजनमेतेषां शिक्षकाणाम्।

प्रत्याङ्ग्लविद्यालयं संस्कृताध्यापकपदे प्राचीनपण्डितो नियोक्तव्य इत्यासीत्पूर्वं राजशासनम्। मातृभाषया गीर्वाणभाषया वाऽध्यापयितुं क्षमा अप्येते शास्त्रिप्रवरा आङ्ग्लभाषाज्ञानाभावात्तद्भाषागतं भाण्डारकरमहो-

दयविरचितसंस्कृतपाठ्यपुस्तकद्वयं पाठयितुमक्षमाः। छात्रैः परीक्षाप्रश्नोत्तराणि त्वाङ्ग्लभाषाया लेखितव्यानीति नियमसद्भावात्प्राचीनपण्डिताननुपयुक्ता-न्मन्वाना आङ्ग्लोपपदधारिणः शिक्षकाः शास्त्रिणां विषयेऽनादरभावमभज-न्त। आङ्ग्लभाषागतसंस्कृतपाठ्यपुस्तकद्वयमध्यापयितुमीषदाङ्ग्लभाषाध्ययनं शास्त्रिणामवश्यकरणीयत्वेनापतितमित्यासीद् व्युत्क्रमः संस्कृताध्यापनविषये। संस्कृताध्यापने शास्त्रिप्रवराणामपेक्षयाऽऽङ्ग्लोपपदधारिणोऽध्यापकानुपयुक्त-तरानीक्षमाणैर्भाण्डारकरमहोदयैः प्रथमपाठ्यपुस्तकस्थे प्रस्तावे लिखितं यत् " Sanskrit would be considerably more easy than it is, if there were men educated in our English Colleges to teach it. "—अत्र वयमेतद्वक्तुकामा यद्भाण्डारकरमहोदयदृशा सन्तु नाम केऽपि दोषाः शास्त्रिणामध्यापने। किन्तु तेषां गीर्वाणभाषाज्ञानेन साकमाङ्ग्लोप-पदधारिणां संस्कृतज्ञानं न मात्रयापि तुलामर्हति। उपरितनमतमनुसृत्यैव सम्प्रति शास्त्रिण आङ्ग्लविद्यालयेषु क्वाचित्कत्वेनाध्यापकपदे नियुज्यन्ते, ये च नियुक्तपूर्वास्तेऽप्यचिरादेव विश्रान्तिवृत्तिभाजो भविष्यन्ति। अधुना तु मातृभाषायामनूदितयोरपि भाण्डारकरकृतपुस्तकयोराङ्ग्लोपपदधारिणाम-ध्यापकानां च संस्कृतानुरागोत्पादने चिरानुभवसिद्धमकिञ्चित्करत्वमेव प्रत्यक्षीक्रियते।

वाराणसीविहारकलिकातालवपुरमद्रादिविभागेषु यथा प्राच्यशास्त्र-नैपुण्यसम्पादनार्थं विश्वविद्यालयद्वारा राजशासनद्वारा च विविधपरीक्षाः परिकल्पिताः संस्कृतमहाविद्यालया वा प्रतिष्ठापितास्तथा मोहमयीविभागे तदर्थं न केऽप्युपायाश्चिन्तिताः। चिन्तिताः स्युश्चेत्ते दरिद्राणां मनोरथा इव विफलतां गताः। कियदिदमौदासीन्यं मन्दादरो वा मोहमयीविभागस्थानां गीर्वाणवाणीविषये। महदेतत्सौभाग्यं यत्पुण्यपत्तने 'वेदशास्त्रोत्तेजकसभा' 'वेणुग्रामे' च मधुरवाणीपत्रिकासञ्चालनमित्येते गीर्वाणभाषासमुत्कर्षोपायभूताः केचित्समुद्यमाः प्रचलिताः सन्ति। किन्तु समुचिताश्रयं विना ते कथं सुफलतामावहेयुः?। गीर्वाणभाषा प्राच्यविद्या वा निमित्तीकृत्याङ्ग्लभाषा-मुखेनैव प्रस्तुताः प्रयत्नास्तु कियन्मात्रं गीर्वाणभाषोपकारका इत्ययं विषयो विज्ञैरेव निर्णेयः।

एतस्यां दुरवस्थायां संस्कृतभाषासमुद्धारमन्तरेण नयनपदवीमापतन्तः केऽप्युपाया अत्रोपन्यस्यन्ते। आङ्ग्लविद्यालयेषु संस्कृताध्ययनस्य द्विविधेन पाठ्यक्रमेण भाव्यम्। एकः सामान्यच्छात्राणां कृतेऽन्यश्च समधिकनैपुण्यलिप्सूनां कृते। रामायणमहाभारतादिसदृशपद्यरचनाया हितोपदेशपञ्चतन्त्रादिसदृशगद्यरचनायाश्च परिमितव्याकरणोपकृतमर्थनिर्धारणक्षमत्वमेवास्तु प्रमुखप्रयोजनमाङ्ग्लकलाशालागते संस्कृताध्यापने। अयं पाठ्यक्रमः सामान्यानां बुद्धिमतां च च्छात्राणां समान एव भवतु प्रवेशपरीक्षापर्यन्तम्। अनन्तरं महाविद्यालयेषु प्रथमवर्षादारभ्यैव सामान्यानां मतिमतां च च्छात्राणां भिन्नौ पाठ्यक्रमौ प्रशस्येते। सामान्यच्छात्राणां कृते लघुकौमुदीपठनसनाथं साहित्यशास्त्रपरिचयसमेतं च महाकाव्यनाटकादीनां सम्यगर्थावगममात्रं भवतु संस्कृताध्ययनप्रयोजनम्। सविशेषप्रावीण्यलिप्सुभिर्मतिमद्भिश्छात्रैर्विशिष्टशास्त्राणां प्रगाढाध्ययनं समाश्रयणीयम्। महाविद्यालयेषु लघुकौमुद्या मध्यकौमुद्या वा पठनपाठनयोर्नान्तरीयकत्वं संस्कृताध्ययनेऽत्र परिगण्यते। विश्वविद्यालयपरीक्षापत्रिकासु केचित्प्रश्नाः संस्कृतभाषया प्रष्टव्यास्तेषां प्रत्युत्तराण्यपि संस्कृतभाषयैव च्छात्रैर्लेखनीयानीति विधिर्विधेयः। संस्कृतानुवादेन सार्धं संस्कृतानुवादस्थाने वा वाक्यवृद्धिसङ्क्षेपविधानरूपाः पाठ्यग्रन्थसारकथनस्वरूपाः कथावर्णनपत्रादिप्रबन्धलेखनात्मका विशिष्टवाक्प्रयोगाकाङ्क्षां सूचयन्तश्चापेक्षितसंस्कृतोत्तरा विविधाः संस्कृतप्रश्नाः परीक्षापत्रिकायां सन्निवेश्याः। एतादृशाः प्रश्नाः संस्कृतानुवादप्रश्नापेक्षया सुगमतराः संस्कृतज्ञानोपचयकराश्च सन्ति। सामान्यच्छात्राणां तु संस्कृतभाषयाऽनुवादप्रबन्धादिलेखनं नेष्यते। तैः परीक्षोत्तरेषु प्रायः पाठ्यग्रन्थभागानां मातृभाषयाऽनुवादः कार्यः। उपरिदर्शितविविधप्रश्नानां तु केचित्सुगमप्रकाराः सामान्यच्छात्राणां कृतेऽप्युपयुक्ताः स्युः। आङ्ग्लभाषापेक्षया संस्कृताध्यापने संस्कृतभाषा मातृभाषा वा यथाप्रसङ्गं प्रयुक्ता सती महद्धितमावहेत्। प्रावीण्यपरीक्षासु न केवलं मातृभाषयाऽऽङ्ग्लभाषया वा मूलसंस्कृतस्यानुवादोऽपेक्षणीयः, किन्तु मूलगद्यपद्यविभागस्य संस्कृतटीकानुसारि संस्कृतव्याख्यानमपि च्छात्रेभ्योऽपेक्षणीयं, येन ते छात्रा मूलग्रन्थेन साकं टीकाग्रन्थानप्यध्येष्यन्ते। एतेन नूतनपाठ्यक्रमानुसरणेन संस्कृतभाषायां

समधिकनैपुण्यमधिगच्छद्भिरेव विश्वविद्यालयोपाधिधारिभिः संस्कृतशिक्षकपदमन्वर्थतया मण्डितं स्यादित्यत्र नास्ति शङ्काकणिकाऽपि ।

संस्कृतभाषासमुन्नतेर्न कापि प्रत्याशा यावदेतादृशा गुणवन्तः शिक्षका न लभ्यन्ते । किन्तु यावद्विश्वविद्यालयस्थविद्वांस उपरिवर्णितं पाठ्यक्रमपरिवर्तनं विधातुं नेहन्ते तावदध्यापननैपुण्यमधिजिगमिषुभिर्गीर्वाणभाषाशिक्षकैः किं विधेयमित्यत्र विषये लघुविमर्शः क्रियते ।

आदौ गीर्वाणभाषायाः प्राथमिकाध्यापनार्थं प्रयोगनिपुणा अमन्दोत्साहाश्चाध्यापका अपेक्ष्यन्ते, यत एतादृशा एवाध्यापकाः सततं बालच्छात्रहिताय प्रयतन्ते । उत्साहशीलानामेवाध्यापकानामुत्साहच्छटा तेषु सङ्क्रम्य तेषां मनस्यध्ययनं प्रति ऋजुभावं समुत्पादयति । पुनश्चाध्यापको रसज्ञः स्याच्चेत्तस्य साहित्यमात्रेणोत्कृष्टग्रन्थानामन्तेवासिनां साहित्यरसाभिरुचिः सुष्ठु समाहिता भवति । एतदर्थं काव्यविवृतिकाले रसभावालङ्कारविवरणं यथासमयं सविस्तरतया विधातुं प्रत्येकमध्यापकेन प्रयतितव्यम् । अध्यापनविषयेऽध्यापकैः

"शिष्टा क्रिया कस्यचिदात्मसंस्था संक्रान्तिरन्यस्य विशेषयुक्ता ।
यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव ॥"

इति श्रीकालिदासवचनं सर्वदा पुरः स्थापनीयम् । अपि चाध्यापकस्योत्साहशीलता रसज्ञता चाविरताध्ययनेन सद्ग्रन्थानाम् । अधिगतविश्वविद्यालयोपाधिभिः शास्त्रिभिः शिक्षकैर्महाविद्यालयेष्ववर्त [illegible] तत्प्राय उपलब्धाभावनन्तरं साहित्यद्रुमगच्छति कालव्यवधानादपुनरावृत्तिवशाच्च । तस्मात्तैरध्ययनगतवाताभ्यासनिगमार्थं सततमध्ययनशीलैर्भाव्यमिति नितरामुपयुक्तमेव । गीर्वाणभाषायाः स्वभावसौन्दर्यं तेषु तेषु महाकाव्यनाटकादिग्रन्थेषु कथं व्यक्ततामागतम्, प्रकृतिसुन्दर [illegible] भावविचाररत्नानि तैस्तैः कविप्रवरैर्निहितानि [illegible] इत्येतत्कृत्स्नमध्यमस्कृदध्ययनादृते न [illegible] ज्ञातुं मूलग्रन्थवाचनं सम्यगर्थविवृतिः [illegible] एवं मल्लिनाथादिटीकाकृताम् [illegible] समाश्रिता सती छात्रहिताय कल्पते । [illegible]

प्राचीनग्रन्थार्थं प्रतिपादयन्ति, ऐतिह्याचारविधीनां किं रहस्यं कथयन्तीत्येतदपि गीर्वाणभाषाध्यापकेन संद्रष्टव्यम्। एतच्च ज्ञानं यथा शिष्याणां श्रुतिविषयं दृष्टिविषयं च सुगमतयाऽऽगच्छेत्तथा तेन प्रयतनीयम्। एवमेव पूर्वाचारविचाराणामाधुनिकाचारविचाराणां च सम्बन्धश्छात्राणां मतिं सौकर्येणाधिरोक्ष्यति। भारतीयाचारधर्मस्य सम्यग्बोधनायाध्यापकेन च्छात्रेभ्यः प्राचीनैतिह्यान्यपि यथावसरं कथनीयानि। काव्यविवरणसमकालमेव यथासम्भवं कविचरितानि कथयितव्यानि। कदाचित्काव्यनाटकानां सारग्राहिणी समीक्षापि कार्या। सा यथा—काव्यनिर्माणकाले किं कवेर्मनसोऽधिष्ठानं, के के गुणाश्च तस्य तस्य कवेः प्रतिभाविशेषं प्रदर्शयन्तीत्येतेषां विषयाणां सम्यगालोचनमपि प्रत्येकमध्यापकेन यथाप्रसङ्गमनुष्ठेयम्। प्रौढच्छात्राध्यापने न वाक्यानां श्लोकानां वा वाच्यार्थमात्रज्ञापनं पर्याप्तं भविष्यति, किन्तु शब्दान्तर्हितो यः कोऽप्यपूर्वो व्यञ्जनारूपोऽर्थस्तं रुच्या स्वयमेव प्रथममास्वाद्य पुनः स शिष्याणां पुरतः सकौशलमाविष्कार्यः। यद्येतत्सकलमप्यध्यापकस्य कर्तव्यत्वेनापतति तर्हि तेन यथानिर्देशं पूर्वसूरिग्रन्थानधीत्य ते तेऽध्यापकगुणाः सम्पादनीया एव।

नाटकवाचने शिक्षकेण विशिष्टपदवाक्प्रयोगाः संवादप्रकारा वाक्प्रचाराश्च सविशेषमभ्यसनीया येन तदानीन्तनानां संवादरीतिं विज्ञाय स्वीये सम्भाषणे लेखने वा नाटकस्थानि सुश्लिष्टपदानि सामीचीन्येन प्रयोक्तुं स प्रभविष्यति। एषा ग्रन्थाध्ययननिरतिरध्यापनकालेऽविरतस्यन्दिन्या मधुरभाषया परिणमेत्फलदायिनी च भवेच्छात्राणामित्यत्र नास्ति संशयलेशावकाशः। यावन्मात्रमध्यापकः पूर्वसूरिग्रन्थाध्ययननिरतः स्यात्तावन्मात्रं तस्य वाक्पाटवं प्रागल्भ्यमुपागत्य च्छात्राणां संस्कृताध्ययने रतिं जनयिष्यति। अभ्यासेनैवैतत्सर्वं सुकरं भवति। 'स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्' इत्युपनिषद्वचनमध्यापकैः सततमभ्यसनशीलैर्भाव्यमित्यस्मत्सिद्धान्तमुपोद्बलयति।

अन्यदपि किञ्चिद्वक्तव्यमत्र यद्गीर्वाणभाषाध्यायिनः प्रायो विविक्तसेविनो मितभाषिणश्च दृश्यन्ते। विशेषतोऽभिधेयमत्र यत् "प्रायः समानविद्याः परस्परयशःपुरोभागाः" इति कालिदासोक्तेर्निदर्शनभूता आत्मानमेव कृतार्थं मन्यमानाः केचन प्राच्यपण्डिताः सरसग्रन्थविरचनमतिं विहाय यत्र कुत्राप्यन्येषामधरोत्तरव्यक्तावेव स्वरुचिमाविष्कुर्वन्ति। महदेतच्चित्रं यत्सासूयाः

परस्परकुत्सापरितुष्टाश्चेमे परेषां वैदुष्यविषयेऽकारणमेव कृपणमतित्वं प्रकटयन्ति, तेषामधःपातनायापि यथा कथञ्चित्प्रयतन्ते च। अधुनातनकालनिदाघेन कृशीभूताया संस्कृतवाक्स्रोतस्विन्यामियं प्रवृत्तिर्न कमपि गुणमावहति, प्रत्युतात्मनाशायैव कल्पते। अतः सर्वैः संस्कृतानुरागिभिः 'संहतिः कार्यसाधिका' इति वचनं संस्मृत्य स्वदोषपरिमार्जनाय पतत्रिलघ्वारन्यायेन गीर्वाणवाक्प्रसाराय च प्रयतितव्यम्। तैः प्रतिनगरं संस्कृतसाहित्यसभाः संस्थापयितव्याः, यासु कमपि रुचिरविषयमधिकृत्य संस्कृतव्याख्यानानि संविधेयानि, रम्याः संस्कृतकथाः कथनीयाः, संस्कृतनाटकस्थाः समुत्कृष्टप्रवेशाश्च नाटयितव्याः। तादृशीषु सभासु छात्राणामप्यध्यापकैः सार्धं संविभागोऽस्तु येनाध्यापकानामध्यापनपाटवं वृद्धिं प्राप्स्यति छात्राणामपि संस्कृताध्ययने समुचितरुचिरुत्पत्स्यते च॥

---

## प्राच्यप्रतीच्यशिक्षापद्धतिसमीक्षा।

भारताभ्युदयसाधिका का शिक्षापद्धतिर्भवेदित्यत्र विषये बहवः पाश्चात्यविद्याविलुब्धमानसाश्चिन्तनचतुरा जना विविधोपायांश्चिन्तयन्ति। किन्तु यस्यां भाषामञ्जूषायां भारतीयसंस्कृतिरत्नान्यन्तर्हितानि तस्या गीर्वाणवाण्या मृतत्वहेयत्वे प्रमाणीकृत्य पाश्चात्यैकविद्याप्रसारमेव परमोत्कृष्टोपायं मन्यमाना इमे वनात्तरोर्मूलं परिहृत्य शाखा जलेन सिञ्चन्ति, स्वपितरौ विस्मृत्यान्येषां कृतकपुत्रत्वं परिगृह्णन्ति, प्रकृतिं परित्यज्य वा विकृतिमुररीकुर्वन्तीत्युक्तिर्न प्रायोऽसामञ्जस्यमावहेत्। विशालतरभारतीयगोष्ठीषु मन्त्रं च सुरवागध्ययनसंसक्तचेतःसु सत्स्वपि केषुचित्पाश्चात्यपण्डितेषु, प्रतीच्यविद्यैकशरणाः केचन भारतीयविद्वांसो मेकॉलेमहोदयो[illegible] [illegible] श्रद्दधानाः प्राच्यविद्यापरिवादरताश्च परिदृश्यन्त [illegible] कालवैपरीत्यम्। [illegible] व्यसने केचन नयनगोचरीभवन्ति [illegible] संस्कृतपण्डिताः [illegible]

षिता अपि विनीतवेषाः, सरस्वतीनिकेतनायमाना अपि निजगुणप्रख्यापने मूकाः, विविधशास्त्राध्ययने कृतभूरिपरिश्रमा अप्यलब्धपर्याप्तधनाः, अधना अपि मानधनाः, पाश्चात्यैकपक्षपातिभिश्च तृणाय मन्यमानाः सन्ति ।

सन्तु नाम केऽपि दोषाः संस्कृतविदुषाम् । पदपदार्थव्याख्यानपुरस्सरं प्राङ्क्तग्रन्थविवेचने तेषामप्रतिमैव प्रतिभा विद्योतत इत्यत्र नास्ति सन्देहलवोऽपि । प्राच्यानामध्ययनाध्यापनपद्धतिर्बहुशो मुखाधिष्ठिता, न केवलं ग्रन्थाधिष्ठिता । तेषां न तथा पल्लवग्राहिपाण्डित्ये समादरो, यथा विद्यते मूलग्राहिपाण्डित्ये, येन ते ग्रन्थगतं प्रधानविषयं यथायथं प्रवक्तुं पारयन्ति । एषैव प्राच्यविद्वद्गुणसम्पदतन्द्रितेन मनसा परिरक्षणीयेति सुतरामावश्यकम् ।

नात्रास्मासु प्राच्यपण्डितगुणैकपक्षपातित्वं स्वदोषनिगूहनपरत्वं वाऽध्यारोपयन्तु मनीषिणः । प्राच्यगुणेष्विव प्रतीच्यगुणेष्वपि वयं बद्धादराः । यथा पाश्चात्यपण्डिताः संस्कृतग्रन्थाध्ययने सारग्राहिणीं विचिकित्सापद्धतिं समवलम्ब्य स्थलकालेतिवृत्तादिविमर्शपूर्वकं गवेषणापूर्णान् सिद्धान्तानुपपादयितुमीशते, न तथा पौरस्त्यपण्डिताः । प्राच्यविद्वांसो विश्लेषणपद्धतिमाश्रित्य काव्यगतश्लोकानामेकैकशो रसभावालङ्कारविवरणे मतिप्रकर्षमाविष्कुर्वन्ति । पाश्चात्यरसज्ञास्त्वन्यादृशीमेव काव्यसमीक्षापद्धतिं प्रकटयन्ति । संश्लेषणपद्धत्या तस्य तस्य कवेः काव्यजातमालोड्य शब्दान्तर्हिता विविधप्रवृत्तीः संपरीक्ष्य च तस्य तस्य मनसो मूलाधिष्ठानं सङ्कलनेनाभिव्यङ्क्तुं काव्यरसमास्वादयितुं च ते क्षमाः । दर्शनशास्त्रेषु तौलनिकीमैतिहासिकीं च पद्धतिमङ्गीकृत्य कलुषमतयः सन्तोऽपि ते विभिन्नसंस्कृतिसाधर्म्यं तत्तत्सिद्धान्ततुल्यत्वं च प्रदर्शयितुं प्रयतन्ते । संस्कृतानुशीलनमूलकं नूतनं भाषाशास्त्रं समुद्भाव्य तद्बलेन वेदवाङ्मयार्थनिर्धारणे कृतसमुद्यमाः पाश्चात्याः प्रस्खलन्तोऽपि प्रशंसाभाजनं खलु । अद्यत्वे तु 'स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्' इत्युक्तिं सार्थतां नयतां वैदिकधर्मानुयायिनां वर्धत एव वेदार्थविषयेऽज्ञानविलसितम् । अधुना भारतीयपण्डितानां मतिर्वेदाङ्गानामेकदेशमात्राध्ययने पर्यवसिता दरीदृश्यते, न तु साक्षाद्वेदाध्ययने । विरला एव तादृशा अनेकशास्त्रजलपूतमानसाः पदवाक्यप्रमाणज्ञा विद्वद्धौरेया यादृशाः पूर्वं प्राचुर्येणाध्यगम्यन्त । वर्तमान-

यतान्यां भारते प्रायः पदज्ञापकव्याकरणैकशास्त्रस्य, वाक्यज्ञापकमीमांसैक-शास्त्रस्य प्रमाणज्ञापकन्यायशास्त्रमात्रस्य वाऽध्ययने यापितबहुवत्सराः पण्डिताः समजायन्त। पौरस्त्यविद्वांसश्च मूलग्रन्थविवेचने निपुणतमाः सन्तोऽपि ग्रन्थसम्बन्धिनः स्थलकालेतिवृत्ताद्यानुषङ्गिकविषयान्न जानन्ति, न वा तत्र समवदधते। तेऽभिप्रयन्ति यद् "नैतादृशैर्विषयैरस्मदीयं प्रयोजनम्। एतदन्वेषणं नूनं काकदन्तगवेषणमेव जलताडनप्रकारो वा। पुष्परसपानं परित्यज्य किमेतया कुसुमदलपरिगणनया" इति। पक्षैकावलम्बिनी नैषा प्राच्यपण्डितोक्तिरुपादेयतामर्हतीति सुव्यक्तमेव। अतो दृष्टिसङ्कोचं दूरी-कुर्वाणा विततालोकं विदधाना च प्रतीच्यानामध्ययनाध्यापनपद्धतिः पौरस्त्यपण्डितैरवश्यमभ्युपगन्तव्या।

एतस्य तु प्रतीच्यपद्धतिविज्ञानस्याऽऽङ्ग्लभाषादिगतग्रन्थनिष्ठत्वात् तत्पद्धतिपरिचयस्तत्तद्भाषाज्ञानमपेक्षते। विभिन्नभाषाधिगमस्य पुनः कति-पयजनानामेव सुकरत्वात् तत्तद्भाषानभिज्ञानां कृते विविधभाषाकुशलैस्त-त्पद्धतिविद्भिः संस्कृतेन मातृभाषया वा तादृशग्रन्थविरचने मतिः कार्या, येन संस्कृतादिवाङ्मयमपि परमां स्फीतिमियात्। इदं त्वत्रावधेयं यन्मूल-ग्रन्थाध्ययनादृते पद्धतिप्रयोगविज्ञानमात्रमकिञ्चित्करमेव। संलक्ष्यते हि मोघत्वं मूलग्रन्थाध्ययनविहीनस्य पद्धतिविज्ञानमात्रस्य पाश्चात्यसम्प्रदायिषु विश्वविद्यालयेषु, यत्र संस्कृताध्ययनेऽप्याङ्ग्लभाषाव्यवहारस्य सर्वमूर्धन्यत्वा-त्संस्कृतमूलग्रन्थानां पाङ्क्तज्ञानं न यथावदधिगन्तुं पार्यते। पर्याप्तसंस्कृत-ज्ञानासत्त्वेऽपि पाश्चात्यग्रन्थैकशरणास्तत्रत्या भारतीयच्छात्राः पद्धतिविज्ञान-वशादेव संस्कृतपरीक्षाः सम्यक्समुत्तीर्य प्राच्यविद्वद्दृशा पल्लवग्राहिपण्डित-कोटिमाटीकन्त इति नितरामुपपन्नमेव।

नात्र केनापि मन्तव्यं यत्कृपणमतिता मतग्रहिलता वा प्राच्यविदुषा-मेव व्यवच्छेदिकेति। उपरितनकोटिमवगाहमाना आङ्ग्लोपपदधारिणोऽपि गाधज्ञानवशाद् गीर्वाणवाणीं शास्त्रिवरेण्यांश्चानुपयुक्तान्मन्वाना दृष्टिसङ्कोचं दुराराध्यत्वं च प्रकटयन्तीत्यतः पाश्चात्यपद्धतिविज्ञानमेव केवलमालोकं विस्तारयतीति मास्तु कस्यापि मिथ्याग्रहः। वरमत्र प्राच्यपण्डितानां प्राचीनसम्प्रदायसंरक्षकमनेकसंशयोच्छेदि परोक्षार्थदर्शकं च शास्त्रैकाध्ययन-

परत्वं, न पुनः परम्परोच्छेदि प्रत्यक्षार्थमात्रदर्शकं दुराराध्यताजनकं च पाश्चात्यसम्प्रदायानुसारित्वमिति नो मतिः। 'उपयुक्तत्व'—पदेनोदरभरणक्षमत्वमेवावबुध्येत चेदिदानीं संस्कृतविद्येवाङ्ग्लविद्यापि कथमनुपयुक्तत्वं न भजेत। तदर्थं क्षपितविपुलधना आङ्ग्लोपाधिधारिणः कति जना पर्याप्तजीविकां लब्धुं प्रभवन्तीत्याङ्ग्लविद्याभिमानिनः प्रष्टव्याः। तस्मादुपयुक्तत्वविषये प्राच्यविद्या प्रतीच्यविद्या चासंशयं तुल्यकक्षतामेवाधिरोहत इत्यस्मदाशयः।

महदेकं विषादस्थानं यत्संस्कृतवाङ्मयमधिकृत्य केचन भारतीयपण्डिता अपि नूतनसिद्धान्तसमन्वितान् स्वीयग्रन्थानाङ्ग्लभाषयैव विरचयन्ति, येन सुरभारती वञ्चितोपोषिता सती मुमूर्षुत्वमापद्यते। अद्यत्वे पद्यपरिपुष्टे संस्कृतवाङ्मये न तावती पद्यप्रणयनस्यावश्यकता प्रतिभाति, यावती सरससरलानां गद्यकाव्यकथानामभिनवसिद्धान्तसमेतानां गद्यप्रबन्धानां च। अतो 'गद्यं कवीनां निकषं वदन्ति' इति वचनमनुस्मृत्य तत्तद्वाङ्मयविधानिपुणैः सुरसरस्वतीश्रेयःसाधने प्रयतितव्यम्। एतद्ग्रन्थविरचनायान्यादृशा एव पण्डिता अपेक्ष्यन्ते, ये काव्यशास्त्रादीनां प्रगाढानुशीलनप्रभावात्संस्कृताभिभाषणलेखनवैदग्ध्यं प्रकाशयन्तः पाश्चात्यपद्धतिप्रयोगपटवोऽपि भविष्यन्ति। एवं प्रतीच्यपण्डितपद्धतिसनाथं प्राच्यानां मूलग्राहिपाण्डित्यमनल्पफलाय कल्पेतेत्यत्र नास्ति संशयावकाशः।

अतो दोषवर्जमुभयविधविद्यागतानां गुणानां परिरक्षणोपायभूतानि कानिचन वस्तून्यत्र प्रस्तूयन्ते—

१ साहित्यव्याकरणन्यायमीमांसावेदान्तधर्मशास्त्रायुर्वेदादिविषयाणां सम्यगध्ययनाय वाराणसीविहारकालिकास्थानलवपुरमद्रादिविभागेषु यथा संस्कृतमहाविद्यालया राजशासनानुरोधेन प्रतिष्ठापितपूर्वाः सन्ति, तथा मोहमयीविभागेऽपि राजशासनानुमत्या संस्कृतमहाविद्यालयः प्रतिष्ठापयितव्यः। अत्रार्थशास्त्रराजनीतिशिल्पशास्त्रज्यौतिषसङ्गीताद्युपयुक्तविषया अपि पाठ्यक्रमे सन्निवेश्याः। तौलनिकज्ञानसौकर्यार्थं संस्कृतव्यवहारप्रधानेन शास्त्राध्ययनेन साकं तत्र च्छात्राणामाङ्ग्लभाषाया अपि ज्ञानं प्रवेशपरीक्षापर्यन्तं वैकल्पिकं भवतु। शास्त्रनैपुण्योपाधिमधिगत्य वा छात्रैराङ्ग्लभाषाऽध्येतव्या।

२ पाश्चात्यविद्यासम्पादनार्थं प्रतिप्रान्तं प्रतिष्ठापितेषु भारतवर्षीयविश्वविद्यालयेषु पाश्चात्यविद्याविभागेन सार्धं प्रकल्पितो विद्यते प्राच्यविद्याविभागोऽपि ( Oriental Faculty ) यत्र प्राच्यविद्यानैपुण्यलिप्सूनां कृते 'एम्. ओ. एल्.'– परीक्षा शास्त्रिशिरोमण्यादिपरीक्षाश्च तत्तद्विश्वविद्यालयद्वारैव व्यवस्थापिताः। तथा मोहमयीविश्वविद्यालयसमित्यापि प्राच्यविद्याविभागं प्रकल्प्य परीक्षोपक्रमः कार्यः। अत्र परीक्षाप्रश्नोत्तराणि संस्कृतभाषयैव च्छात्रैर्लेखनीयानीति विधिर्विधेयः। संस्कृतविषये 'पीएच्. डी.'–उपाधिलाभार्थे विरचनीयः प्रबन्धः संस्कृतेनैव लेखनीय इत्यपि नियमो गीर्वाणभाषासमुत्कर्षाय विधातव्यः।

३ मोहमयीविश्वविद्यालयीयसंस्कृतपरीक्षास्वाङ्ग्लभाषैव मूर्धन्यपदं भजते। प्राच्यविद्याविषये पाश्चात्यैराङ्ग्लभाषाया लिखितं वाङ्मयं छात्रैरवश्यमध्येयं, पाश्चात्यानां विचिकित्सापूर्णा गवेषणापद्धतिरपि स्वायत्तीकार्या। किन्तु संस्कृतपरीक्षासु च्छात्रैः प्रत्यङ्कशतं पञ्चाशदङ्कपरिमितानां प्रश्नानामुत्तराणि संस्कृतभाषयैव लेखनीयानि, अवशिष्टानि च मातृभाषयाऽऽङ्ग्लभाषया वेति वैकल्पिको विधिर्विधेयः। संस्कृतोपाधिपरीक्षायाः कश्चिदंशो मौखिक एव भवतु वर्णोच्चारसंस्कृतसंलापादिशक्तिपरीक्षार्थम्।

४ संस्कृतमहाविद्यालयोपाधिधारिणां विदुषां राजशासनद्वारा जीविकोपायाः परिकल्पनीयाश्चेत्ते यथापूर्वं प्रत्याङ्ग्लपाठशालं प्रत्याङ्ग्लमहाविद्यालयं च संस्कृताध्यापकपदे नियोक्तव्याः। अध्यापकपदनियोजनात्पूर्वं संस्कृतपण्डितैरप्यध्यापनमहाविद्यालये वर्षमात्रमध्यापनशास्त्रनैपुण्यं सम्पादनीयमिति नियमो विधेयः। तेषां मासिकी वृत्तिश्चेतरविषयाध्यापकवृत्तेरन्यूना भवतु।

५ भारतीयसंस्कृतिरक्षणे गीर्वाणवाण्या महत्त्वं समवबुध्य भारतीयनृपैः सम्प्रदायाचार्यैः श्रेष्ठिभिरन्यैर्वा जनैः स्वप्रेरणया प्रतिनगरं संस्कृतपाठशालाः प्रतिष्ठापनीयाः, प्रचलितपूर्वाश्च संरक्षणीयाः। पाठशालानां पर्यवेक्षकपदे राजशासनानुरोधेन नियोक्तव्यः प्राच्यप्रतीच्यविद्यानिपुणः पण्डितो यस्याभिमतानुसारेण राज्यशासकैः पाठशालासञ्चालकाः समुचितसाहाय्यधनदानेन परिपोषणीयाः। एतासु पाठशालासु प्रायः संस्कृतमहाविद्यालयोपाधिमन्तः शास्त्रपारङ्गता विद्वांसोऽध्यापकपदे नियोक्तव्याः।

६ आङ्ग्लमहाविद्यालयपाठ्यक्रमे पर्याप्तव्याकरणज्ञानाय पाणिनीयपरिभाषापरिचयाय च बी. ए. परीक्षापर्यन्तं लघुकौमुद्या मध्यकौमुद्याश्च पठनपाठनयोर्नान्तरीयकत्वं परिगणनीयमिति नूतनो विधिर्मोहमयीविश्वविद्यालयसमित्या स्वनियमावल्यां समावेश्यः।

७ संस्कृतभाषाप्रसाराय मोहमयीमण्डले तेषु तेषु नगरेषु प्रतिवत्सरं संस्कृतसाहित्यसंमेलनं सम्पद्यतामिति हेतोः सम्मेलनान्तर्गतविविधकार्यदर्शिका चिरस्थायिनी विद्वत्समितिरेका संस्थाप्या, या नियतशुल्कप्रदानपूर्वकं संस्कृतप्रणयिभिः सदस्यैः संवर्धनीया। प्रतिनगरं च स्थापनीया गीर्वाणवाग्वर्धिन्यसभाः याः संस्कृतसाहित्यपरिषत्संस्थया सङ्गच्छन्ताम्।

८ संस्कृतस्य सार्वजनीनप्रचारार्थं संस्कृतानुरागोत्पादनार्थं च चिरस्थायिन्या विद्वत्समित्या हिन्दीप्रचारसंस्थावद् व्युत्पत्तिपरीक्षात्रयं प्रकल्पनीयं, यस्मिन् सुगमरीत्या प्रौढाप्रौढैः सामान्यजनैरपि वर्षत्रयाभ्यन्तरे संस्कृतभाषायां व्युत्पन्नत्वं सम्पादितं स्यात्।

९ गीर्वाणभाषाप्रचारसौकर्यार्थमाङ्ग्लशब्दस्थाने आधुनिकः विविधव्यवहारोचितानां नूतनसंस्कृतपर्यायाणां निर्माणं नितरामावश्यकम्। तदर्थमेका विद्वत्समितिरधिकर्तव्या, याऽऽधुनिकसंस्कृतवाङ्मये प्रयुक्तपूर्वान् पर्यायान् सङ्कलय्य नूतनसमुचितपर्यायांश्च निर्माय शब्दसूचीं प्रकाशयेत्। एषा सूची प्रान्तीयभाषावैभवसंवर्धनायापि भवेदिति सन्देहातीतमेव।

१० आङ्ग्लदेशीयैराङ्ग्लभाषाया जागतिकप्रसाराय तस्या मौलिकं (Basic) स्वरूपं कल्पयित्वा ८५० सङ्ख्याका उपयुक्ततमाः शब्दाः सङ्कलिताः सन्ति। तादृशीमेव रीतिमाश्रित्य कयापि विद्वत्समित्याऽध्ययनसौलभ्याय संस्कृतभाषागतान्युपयुक्ततमानि पदानि परिगणय्य सङ्कलनीयानि। तान्येव पदानि प्रयुज्य बालोपयोगीनि संस्कृतपाठ्यपुस्तकानि विरचयितव्यानि च॥

---

## पद्धतितारतम्यम्।

प्रारम्भिके गीर्वाणभाषाध्यापने हृदयङ्गमत्वमिन्द्रियग्राह्यत्वम् (Concreteness) आनुपूर्वी ( Gradation ) परिमितशब्दसङ्ग्रहोऽभिनयवैपुल्यं

छात्रचित्तरञ्जकाश्च विषया इत्येतानि संवादपद्धतितत्त्वान्युपादेयानि । एष संवादपद्धतितत्त्वाश्रय आङ्ग्लभाषाध्यापनपद्धतेरनुकरणमात्रमिति मास्तु कस्याप्यकारणमन्यथाग्रहः । पाश्चात्यानां बालमनोविज्ञानानुसारीणि यान्यनवद्यानि भाषाभ्यासतत्त्वानि तान्येवोपास्यानि संस्कृताध्यापने, न त्वितराणीति वयमत्राभिप्रेमः । यस्य कस्याप्यनवद्यवस्तुनोऽङ्गीकारो न कदापि दोषाय, प्रत्युत हितायैव भवतीति जानन्त्येव सदसद्व्यक्तिहेतवः 'परीक्ष्यान्यतरद्भजमानाः' सन्तः । एषा संवादपद्धतिर्भारतीयैरविदितपूर्वा काचिन्नूतना सरणिरित्यपि न वयं मन्यामहे । भारतीयैरेषा परिपाटी कदाचिदविकलतया नानुसृता स्यात् । किन्तु तस्या मूलरहस्यमाविष्कुर्वदधस्तनमवतरणं तर्कसङ्ग्रहदीपिकायामुपलभ्यते । यथा—

"शक्तिग्रहश्च वृद्धव्यवहारेण । व्युत्पित्सुर्बालो 'गामानय' इत्युत्तमवृद्धवाक्यश्रवणानन्तरं मध्यमवृद्धस्य प्रवृत्तिमुपलभ्य गवानयनं च दृष्ट्वा मध्यमवृद्धप्रवृत्तिजनकज्ञानस्यान्वयव्यतिरेकाभ्यां वाक्यजन्यत्वं निश्चित्य 'अश्वमानय' 'गां बधान' इति वाक्यान्तर आवापोद्वापाभ्यां गोपदस्य गोत्वविशिष्टे शक्तिरश्वशब्दस्याश्वत्वविशिष्टे शक्तिरिति व्युत्पद्यते ।"

अतः संवादपद्धतिसमाश्रयः केवलं पाश्चात्यानुकरणमिति न केनापि मन्तव्यम् । रुचिवैचित्र्याद्विविधाध्यापनपद्धतीरनुसरद्भिः सर्वैरपि शिक्षकैः सततमृजुचेतसा छात्रहितायैव प्रयतितव्यमिति सन्देहातीतमेव । संवादपद्धतिसदृशा ये ये पन्थानश्छात्रहिताय कल्पन्ते ते तेऽखिला अपि शुभा एवेति स्वीकृते मास्तु कोऽपि विवादावसरः । किन्तु तेषु शुभेष्वपि यत्तारतम्यं तद्विवेकार्हं भवति ।

अत्र संवादपद्धतिविषयेऽश्रद्दधानाः केचिद्वदन्ति यत्संस्कृताध्यापने संवादपद्धतिसमाश्रयोऽनैसर्गिको, यतः संस्कृतभाषाया दैनिकव्यवहारेष्वनुपयुज्यमानत्वान्मृतत्वाद्वा तस्याः प्रकृतिसुभगं संलापस्वरूपनिदर्शनं न कुत्राप्यधुनाधिगम्यते । अन्यच्च संस्कृताध्ययने छात्राणां संवादक्षमत्वोत्पादनं नादिमं प्रयोजनं, किन्तु पूर्वतनभारतीयसंस्कृतेः परिचयार्थं सम्यग्वाचनपूर्वकमर्थनिर्धारणक्षमत्वजननमेव प्रमुखं प्रयोजनम् । संवादक्षमत्वनिर्माणकर्मणोऽर्थावगमक्षमत्वोत्पादनस्य सुकरतरत्वात्संवादपद्धत्यनुसरणं निष्प्रयोजनं

भारतीयसंस्कृतिरधिरमद्यापि वहति भारतीयानां धमनीषु । सर्वेऽपि वैदिकधर्मानुयायिनां नित्यनैमित्तिकानि धार्मिककर्माणि संस्कृतभाषयैवाधुनापि विधीयन्ते । धार्मिकव्यवहारेषु प्रयुज्यमानाया एतस्याः संस्कृतभाषायाः सुबोधत्वं कृतिदर्शनपूर्वकमुच्चार्यमाणैर्वाक्यैः सुष्ठु प्रतीयते। दैनिकव्यवहारेष्वपि विविधप्रान्तस्थैर्गीर्वाणभाषापण्डितैरन्योन्यबोधनार्थं संलापग्रन्थविरचनादिषु गीर्वाणवाणेवोपयुज्यमाना दृश्यते । सांलापिकसंस्कृतस्य च निसर्गमधुरं निदर्शनं संस्कृतनाटकेषु भूयिष्ठमुपलभ्यते । अपरं च संस्कृतोद्भूतासु विविध-प्रान्तीयभाषासु प्रतिशतं प्रायः षष्टिसङ्ख्याकानां शुद्धसंस्कृतशब्दानां सद्भावात्, आधुनिकव्यवहारोचितनूतनशब्दनिर्माणेन प्रान्तीयभाषावैभव-संवर्धने चालङ्कर्मीणत्वान्मातृस्थानीयेयं गीर्वाणवाणी सम्प्रत्यपि जीवन्ती तिष्ठति । इत्थंभूते व्यतिकरे कथं केचिज्जनाः सुरवरस्वस्या मृतत्वं प्रमाणी-कुर्वन्तीति त एव जानन्तु महाभागाः ।

शिक्षकैरध्यापने प्रयुज्यमानं संस्कृतं कालिदासबाणादीनां संस्कृतमिव न शोभनमित्युच्येत चेद्वयमत्र प्रत्युत्तरामो यन्न सर्वेऽपि कालिदासबाणा-दयः । निखिलेऽपि संस्कृतवाङ्मये कालिदासबाणादयोऽङ्गुलिमेया एव नव-नवोन्मेषशालिनः कविप्रवराः । तान् हित्वा पतत्प्रिंसङ्ख्यारन्यायेन यैर्विद्वद्भिः संलापग्रन्थप्रणयनादिकर्म कृतं तेषां सर्वोऽपि समुद्यमो नितान्तं निष्प्रयोजन-स्तेषां ग्रन्थाश्च सर्वथा सुदूरमपास्या इत्युक्तिर्न किञ्चिदपि सामञ्जस्यमर्हति । गैर्वाणी वाणी न केवलमेकविधरीतेः किन्तु विविधरीतीनां निदर्शनम् । एतासां विविधरीतीनां सततानुशीलनं शिक्षकभाषायाः शोभनत्वं पुष्णीयात् । अपरं च गीर्वाणवाक्पण्डितानां संलापसरणिं श्रावं श्रावमपि शिक्षकः स्व-भाषां प्रागल्भ्यकोटिं नेतुं पारयति । गीर्वाणभाषाध्यापकेनैतदनुष्ठानं भूरि-क्लेशकरमसाध्यं निष्प्रयोजनं वा मन्येत चेत्स गीर्वाणभाषाध्यापकपदं कथ-मन्वर्थतया मण्डयिष्यति ? । अल्पवेतनत्वाज्जीविकाचिन्तासन्दानितैः सतत-मुदरपूर्तिकर्मव्यापृतत्वाच्चालब्धावसरैः सामान्याध्यापकैर्नैतत्कर्म विधातुं शक्यत इत्युच्येत चेद्वयमत्र प्रतिब्रूमो यदुपरितनसंवादपद्धतितत्त्वेष्वभ्युपग-तेषु न प्रगाढज्ञानमपेक्ष्यते संस्कृतभाषाया न चापि संलापकुशलत्वं तस्याम् ।

उक्तपूर्वमेवास्माभिर्यत्संलापपद्धतितत्त्वानामुपादेयत्वे सामान्यच्छात्राणां सम्यगर्थग्रहणपूर्वं वाचनक्षमत्वजननमेवास्मदीयमपि गीर्वाणभाषाध्यापन-

प्रयोजनमिति । किन्तु वाचनाध्यापनात्प्रागध्यापकेनानुसरणीयाः केऽप्यनिवार्याः क्रमाः, यैर्विना वाचनं न सामीचीन्येन कर्तुं शक्येत । संवादपद्धतिविषये केषांचिदन्यथाग्रहोऽस्ति यत्पाठ्यपुस्तकसाहाय्यं विना स्वतन्त्रतयैव च्छात्राध्यापकैः संस्कृतसंवादाः क्रियन्त इति । एतत्तु विपर्यस्तं मतं, यतो बालच्छात्रा न स्वातन्त्र्येण संवदितुं प्रभवन्ति प्रारम्भिके काले । तस्मात्पाठ्यपुस्तकगतपाठानुद्दिश्यैव कानिचन संवादपद्धतितत्त्वान्युपयोक्तव्यान्यध्यापने । तेषां तत्त्वानामनुसरणे हेतुस्त्वयं यदिदानीमाङ्ग्लपाठशालासु प्रतिवर्गं छात्राः प्रायः पञ्चत्रिंशत्सङ्ख्याकाः । बहुविधजातीयत्वात्तेषां वर्णोच्चाराः स्वसंस्कारानुगुणं प्रायो दोषसङ्कुलाः । संस्कृतवर्णोच्चारविषये च समधिकमवधानमपेक्ष्यत इति नैव निवेदनीयम् । अतोऽद्य यावत्क्षुण्णा व्याकरणप्रधानानुवादैकपदवी न च्छात्राणां श्रेयसे भवेत् । अनुवादैकपरिपाट्यामनुसृतायां छात्रास्तन्द्रालवोऽनवधानाश्च सम्पद्यन्त इति दरीदृश्यत एव सानुभवैः शिक्षकैः । अनया पद्धत्या बहवोऽध्यापकाः कथनैकपरिपाटीमवलम्ब्य पुस्तकस्थपाठांश्च वाचयित्वा पङ्क्तिशः स्वयमेवानुवादं कुर्वन्ति मातृभाषयाऽऽङ्ग्लभाषया वा, छात्रैश्च केवलमध्यापकोक्तं श्रोतव्यम् । अतश्छात्राणामकिञ्चित्करत्वादेव ते तन्द्रालवः सम्पद्यन्ते । अदत्तच्छात्रवाचनावकाशया चानया पद्धत्या छात्रा न कदापि वाचननैपुण्यमधिगन्तुं प्रभवन्ति । तस्मादियं क्लान्तिकरा पद्धतिर्हेया, छात्रसमवधानजनका काप्यन्या पद्धतिरुपादेया चेति सुनिर्णीतम् । येऽध्यापका आत्मनो मन्दौत्सुक्याद् व्याकरणप्रधानामनुवादैकपरिपाटीं सुकरां नैसर्गिकीं च मन्यन्ते त एव संवादपद्धतिं प्रभूतक्लेशकरामनैसर्गिकीं च पश्यन्ति । न ते पुनर्जानन्ति यदध्यापकदृशा या पद्धतिर्नैसर्गिकी सुकरा च सैव च्छात्रदृशा भूरिक्लेशावहा कृत्रिमा च, येन बहवश्छात्राः संस्कृताद्विरज्येतरभाषाध्ययनमवलम्बन्त इति ।

अतो बालच्छात्राणां संस्कृताध्ययनं प्रति समुचितप्रवृत्त्यनुरागोत्पादनार्थं संवादपद्धत्या उपरितनानि कानिचित्तत्त्वानि पाठ्यपुस्तकं समाश्रित्यानुसर्तव्यानि । तदनुरोधेन पुस्तकगतपाठस्य साक्षाद्वाचनात्प्राक् तं पाठमुद्दिश्य साभिनयभाषणप्रश्नादिरूपं मौखिकाध्यापनं कार्यमध्यापकेन, तदनु पौर्वापर्येण श्रवणोच्चारणप्रतिवचनरूपो भाषाभ्याससत्त्वानुसारी नैसर्गिकोऽनुक्रमोऽवलम्बनीयश्छात्रेण । अनेनोक्तिप्रत्युक्तिरूपव्यवहारेण च्छात्राः सोत्साहं सावधानं

न्चाध्याप्यमानविषयांशभाजो भवन्ति। पाठगतपदानां सन्दर्भसमन्वयपूर्वकं सङ्घशो व्यक्तिशश्चोच्चैरसकृदावर्तनं, लयस्वरसङ्क्रमविरामादिसमन्वितं साङ्घिकं वैयक्तिकं च वाचनं, संस्कृतप्रश्नद्वारा लब्धानां प्रतिवचनरूपाणां पाठगतवाक्यानां विविधच्छात्रैरर्थपरिग्रहपूर्वकं सुस्पष्टमुच्चारणमित्येतत्सकलमपि मौखिकमनुष्ठानं छात्राणां वर्णोच्चारशुद्धये, भाषापरिपाकनिष्पत्तये (Assimilation) साधुवाचनाय च कल्पते। अत्र नेत्रसंस्कारात्पूर्वं कर्णसंस्कारः, उच्चारणात्पूर्वं श्रवणम्, वाचनात्पूर्वं मौखिकमावर्तनम्, लेखनात्पूर्वं वाचनं चेति भाषाभ्यासतत्त्वस्थाऽऽनुपूर्वी समवधेया। एतन्मौखिकमावर्तनमपि स्वाध्यायशीलैर्भारतीयैः सुविदितपूर्वमेव। एतत्सकलमनुकरणप्रधानं कर्म यस्मिंश्छात्रा गुरुमनुकुर्वन्ति। गुरुजनव्यवहारानुकरणेनैव भाषाध्ययनं सुलभं भवति, न तु व्याकरणनियमज्ञानेनेति प्रथितं मनोविज्ञानाधिष्ठितं भाषाभ्यासतत्त्वम्।

अत्र संवादपद्धत्याः कानिचन तत्त्वान्येवाभ्युपगम्यन्ते, न तु साकल्येन संवादपद्धतिः प्रयुज्यत इति सुष्ठु विज्ञातं भवेद्विपश्चिद्भिः। पुस्तकगतपाठमधिकृत्य योऽनुयोगप्रतिवचनरूपो व्यवहारः स एवात्र संवादः। तस्मादस्याः परिपाट्याः 'संवादपद्धतिः' इत्यभिधानात् 'प्रश्नोत्तरपद्धतिः' 'खण्डान्वयपद्धतिः' इति वाभिधानं वरम्। उपरिवर्णितकल्पे संवादपद्धतिः (प्रश्नोत्तरपद्धतिः) कथनपद्धतिरनुवादपद्धतिरित्येताः सकला अपि यथाप्रसङ्गं प्रयुज्यन्तेऽध्यापने। तासां सर्वासां शोभनसमन्वयेनैव समीचीनोदर्केण भाव्यमिति नो मतम्। तस्मादियं परिपाटी 'सर्वसारग्राहिणी पद्धतिः' (Eclectic Method) इति नाम्नाभिधातव्या। प्रश्नविवरणादिकं संस्कृतमाश्रित्य कार्यमित्युक्ते, न तु सर्वेऽप्यध्यापका अस्य कर्मणः शक्ता इत्युच्येत चेद्वयमनुभूतिमधिष्ठाय प्रतिब्रूमो यदल्पाभ्यासवशमेवैतदनुष्ठानमिति। सटीकसंस्कृतमूलग्रन्थानामसकृद्वाचनेन शिक्षको भाषानैपुण्यमधिगत्याध्यापनकर्मापि रसोत्पादकं विधातुं प्रभवेदिति बलीयान्नो विश्वासः। प्रौढच्छात्राध्यापने पूर्वतनपण्डितैरनुसृता मल्लिनाथादिटीकाकृतामर्थविवृतिपद्धतिरीषत्परिवर्तितानुविधेया। परिवर्तनं त्वेतद्यत्कथनैकपरिपाटीं विहाय संस्कृतटीकाकृतां पद्धत्या सममनुयोगप्रतिवचनानुष्ठानरूपो नूतनः कल्पः समवल-

म्बनीयः। संस्कृतमाश्रित्य वक्तव्यमिति यद्यप्युक्तमत्र तथापि नैष सार्वत्रिको विधिः। यथाप्रसङ्गं मातृभाषापि विवरणार्थमुपयोज्येत्युक्तपूर्वमेव।

अध्यापनपटुत्वोपपदधारिभिः शिक्षकैरुपरिसूचितपद्धत्यनुसारिभिर्भाव्यमिति सुतरामाशास्यते। केचित्पद्धतिपटवोऽपि शिक्षका वदन्ति यद् "अध्यापनमहाविद्यालयेऽनुसृता पद्धतिरस्माभिः स्वकीयपाठशालासु नानुसर्तुं शक्यते। यत्रास्माकं प्रतिदिनं पञ्चषड्होरात्मकः कालोऽध्यापनकर्मणि व्यतीतो भवति, तत्र प्रतिपाठं टिप्पणीलेखनार्थमस्माभिः कथमवसरो लब्धव्यः। एतद्भूरिक्लेशवशात्कथमस्माभिः प्रतिदिनमविरतोत्साहैर्भवितव्यम्" इति। एषोक्तिर्नानुपपन्ना। किन्तु वयमेतद्वक्तुकामा यदध्यापनमहाविद्यालयगता पद्धतिः सतताभ्यासवशादध्यापकबुद्धौ सुस्थिरा सती प्रकृतिभावमापद्यते। इत्थंभूते पाठटिप्पणीलेखनप्रयोजनं नावशिष्टं भवति। उपपदलाभानन्तरं शिक्षका न केवलमध्यापनमहाविद्यालयस्थां गीर्वाणभाषाध्यापनपद्धतिमेव परित्यजन्ति, अपि त्वितरविषयाध्यापनपद्धतीरपीति सर्वजनविदिता परिस्थितिः। पद्धतिपटुरध्यापकोऽमन्दोत्साहश्छात्रहितनिरतश्चेत्स पाठटिप्पणीलेखनं विनापि स्वीयेनाध्यापनकर्मणा सर्वदैव च्छात्रचेतःसु पाठ्यविषये रतिं जनयेदित्यत्र नास्ति विवादावकाशः। अध्यापकः पुनर्मन्दोत्साहश्छात्रहितानवहितश्चेत्तदाध्यापनपटुत्वोपपदधारिणापि तेन न किमपि रुचिरं क्रियेत।

अपरं च पद्धतिपटवः शिक्षका अन्यूनत्वेन इत उत्तरमुपलभ्येरन्, यतः केवलं मोहमयीविभाग एवाधुना चत्वारोऽध्यापनमहाविद्यालयाः प्रतिष्ठापिताः सन्ति। एतेभ्यः प्रतिवत्सरं ये कृतविद्या भूत्वा बहिर्गच्छन्ति तेषु केचन लघुपत्तनस्थपाठशालास्वपि शिक्षकपदे नियुज्यन्ते। अतः पद्धतिपटुशिक्षकैरल्पशङ्का न पदं लभते। विधिस्त्वयं कार्यो यत्पद्धतिपटुभिः शिक्षकैरध्यापनमहाविद्यालयगतपद्धते रुचिरत्वं समवबुध्य साऽव्यभिचारेण मनसा स्वशालास्वनुसरणीया।

अनासादिताध्यापननैपुण्यैः सामान्यशिक्षकैरुपरिदर्शिता पद्धतिर्नानुसर्तुं शक्यत इत्यस्य पूर्वपक्षस्य प्रत्युत्तरमेतद्यत्सामान्यशिक्षकैरनुवादपद्धतिरनुविधेया। तथाप्यनिपुणैरिव निपुणैरपि शिक्षकैरेषैवानुवादपद्धतिरेकान्ततः

समाश्रयणीया, सा चैव नैसर्गिकीति चेत्कस्यापि दुराग्रहस्तर्हि तद्दृष्ट्या सर्वेऽप्यध्यापनमहाविद्यालया निष्प्रयोजनास्तेषु च शिक्षकाणामध्यापननैपुण्यसम्पादनोद्यमो निरर्थकश्च । एषा त्वविमृश्यकारिणामेव दृष्टिरित्यतो न सा मनागपि मनोयोगमर्हति । अनुवादपद्धतिस्तु नास्मद्दृशा तथा दोषभूयिष्ठा यथा संवादपद्धतिविषयेऽतिरिक्ताभिमानिभिर्गण्यते । व्याकरणप्रधानाया विश्लिष्टवाक्यानुवादपद्धत्याः संश्लिष्टपरिच्छेदानुवादपद्धतिर्वरमिति नो मतम्। अतः संश्लिष्टपरिच्छेदसमन्वितानि समीचीनानि संस्कृतपाठ्यपुस्तकान्यपेक्ष्यन्त इत्यपि नो भाति । सामान्यशिक्षकाणामनुवादपद्धतिसमाश्रयणं न दोषबहुलं, किन्तु तैर्यत्स्वयमेव वाचनपूर्वकमनुवादः क्रियते, छात्रैश्च केवलं श्रूयते तदनिष्टम् । सामान्यशिक्षकैर्वाङ्मयाध्यापनमधस्तनरीत्या कार्यम्—

प्रथमं तैः समुचितप्रस्तावानन्तरं मातृभाषया पाठसारं कथयित्वाध्याप्यमानः समग्रपाठः पाठांशो वा सन्धिविश्लेषणपूर्वकं सुस्पष्टं सकृद्वाचनीयः । तदनु शिक्षकेण च्छात्रैः साकं स एव पाठांशो सङ्घशो वाचनीयः। अनन्तरं छात्रैस्तस्यैव पाठांशस्य मनोगतवाचनं कार्यम् । मनोगतवाचनसमये शिक्षकेण कठिनपदार्थबोधने साहाय्यकारिणा भाव्यम् । छात्रैरपरिचितपदज्ञानानन्तरं स्वयमेव पाठार्थनिर्धारणे प्रयतितव्यमिति मनोगतवाचनप्रयोजनम् । अवसिते मनोगतवाचने प्रत्येकं छात्रेण वाक्यानि यथार्हमुच्चैर्वाचयित्वाऽनुवादप्रयत्नो विधेयः । अत्रापि शिक्षकेण च्छात्राणां क्लिष्टपदसंहतिबोधन एव साहाय्यं कर्तव्यं, न त्वन्यथा । अनुवादे छात्रसंविभाग एव समधिको भवतु, येन सर्वेऽपि शिष्याः सावधानाः स्थास्यन्ति । अनुवादमनु कैश्चिच्छात्रैः समग्रपाठांशः सुव्यक्तं वाचनीयो येन सर्वेषामपि वाचः शुद्धिर्भवेत्, सर्वे च वाचननिपुणाः सम्पद्येरन् । छात्रवाचनार्थमाङ्ग्लपाठशालासु न कदाप्यवकाशो दीयत इत्यसमञ्जसमेव । इयं वाङ्मयाध्यापनरीतिः सामान्यशिक्षकैरप्यनुसर्तुं शक्या स्यादिति भाति ; अन्यच्च वाङ्मयपरिचयपूर्वकमेव व्याकरणमध्याप्यमिति यद्भाषाभ्यासतत्त्वं तदपि सामान्यशिक्षकैर्व्यवहार्यतां नेतुं शक्येत ॥

—०—

## वाङ्मयाध्यापनरीतिः।

वाङ्मयाध्यापने विश्लिष्टानि ( त्रुटितानि ) वाक्यान्युपक्रमावस्थायां नाध्यापनीयानि। यतस्त्रुटितवाक्येषु नैकाकिनमेव विषयं वस्तु वा पुरस्कृत्य सम्बद्धं वर्णनं कथनं वा क्रियते, येन च्छात्रचित्तानुरञ्जनं सम्पद्येत। अपि च त्रुटितवाक्यद्वारा व्याकरणमेवाध्याप्यते, न तु वाङ्मयं, व्याकरणाध्ययनार्थमेव त्रुटितवाक्यान्युदाह्रियन्त इति च्छात्रहृदयस्थः संस्कारः प्रमार्ष्टुं न शक्यते। अयं संस्कार उपक्रमावस्थायां 'संस्कृतभाषाध्ययनं क्लेशकरम्' इत्युद्वेगमुत्पादयति। अत उपक्रमपाठ्यपुस्तकेषु प्रतिपाठं विषयैकमधिकृत्य सुगमदुर्गमक्रमेण लेखनीयाः सङ्कलनीया वा कथासंवादवर्णनकाव्यात्मकाः संश्लिष्टपरिच्छेदाः, येषूत्तरोत्तरं गीर्वाणभाषागता विविधवाक्यभेदा विविधभावभेदाश्च सम्यगुपदर्शिता भवेयुः। विषयाः पुनर्ज्ञातपूर्वाश्छात्रमनोविनोदकाः प्राच्यसंस्कृतिबोधकाश्च स्युः। यथा—शरीरावयवाः, परिचितक्रियाः, परिचितवस्तूनि, परिचितप्राणिनः, परिचितदृश्यानि च। शरीरावयवानां परिचितक्रियासु वचनप्रतिवचनपूर्वं प्रदर्शितासु प्रारम्भ उपयुक्ततिङन्तानां पाठनं सुकरं भवति।

"वाङ्मयाध्यापने प्रायः कः कल्पोऽनुसर्तव्योऽध्यापकेन, कया दृष्ट्या च" इत्यन्यतमः प्रश्नो विद्यते मम संस्कृताध्यापनप्रश्नावल्यां, यस्य प्रत्युत्तरं क्वाचित्कत्वेन लब्धं मयाद्य यावत्। विरला एव ते जना ये साङ्गुलिनिर्देशं साक्षाद्वाङ्मयाध्यापनरीतिं वर्णयितुं पारयन्ति। अतः सम्यगवधारणार्थं मनोविज्ञानाधिष्ठितभाषातत्त्वावलम्बिनी प्राच्यसम्प्रदायानपायिनी च वाङ्मयाध्यापनरीतिः समासतोऽत्रोपस्थाप्यते।

१ प्रस्तावः [ पदपरिचयः ]—प्रस्तावे ज्ञातविषयेण सममज्ञातविषयः कुतूहलजननपूर्वकं संयुज्यते। विषये ज्ञातपूर्वे सत्यप्यधीयमाना भाषाऽत्राऽज्ञाता, यस्या ज्ञानमधिगन्तव्यम्। अत एवाऽऽदावध्याप्यमानपाठगतानामपरिचितपदानां परिचयो वस्तुचित्राभिनयादिदर्शनपूर्वकं सन्दर्भसमन्वयपुरस्सरं चाध्यापकेन कार्यः। प्रथममध्यापकेन प्रत्यक्षं वस्तु चित्रं वा प्रदर्श्य, तद्वाचकं पाठगतपदं समकालमेव सुस्पष्टमभिधाय, पदं फलके

स्थूलाक्षरैर्विलिख्य च तस्य परिस्फुटमुच्चारणं द्विस्त्रिर्वा छात्रमुखैः कारयितव्यम् । शब्दार्थज्ञापने विविधाः क्रियाः शरीरावयवैर्विधाय चित्रादिदर्शनद्वारा वस्तुसंस्थानगुणधर्मादिकं वर्णनीयं मुखेन । भाषाया घटकावयवो वाक्यं, न तु पदमित्यन्विताभिधानवादिना मतानुसारेणापरिचितपदानि वाक्येष्वनुस्यूतान्येवाध्याप्यानि, न तु विश्लिष्टत्वेन पाठनीयानि । यतः पदज्ञापने वृद्धव्यवहारस्य श्रेयस्त्वमभिमन्वाना अन्विताभिधानवादिनो वाक्यस्य संहतार्थग्रहणेनैव बालानां सम्यग्बोधो भवति, न पदमात्रश्रवणेनेति वदन्ति । तेषां रीतिमनुसृत्य भाषाया व्यवहार एव कार्यो मौखिकाध्यापने । विशेषतश्च बालच्छात्रैः संहतवाक्यश्रवणपूर्वकमेव पदान्यभ्यसनीयानि । यथा—

एषः वृक्षः (अस्ति) । एषा वृक्षस्य शाखा (अस्ति) । शाखायाम् एषः खगः । वृक्षे एतत् फलम् । फलं वर्णेन पीतम् (वर्णोऽत्र प्रत्यक्षं प्रदर्शनीयः) । खगः एतत् फलं भक्षयति (अभिनयदर्शनम्) । एवम् "गच्छ—आगच्छ, उत्तिष्ठ—उपविश, वाचय, वद" इति क्रियापदान्यभिनयद्वारैव पाठ्यन्ते ।

एतत्सर्वं गीर्वाणभाषयैव वक्तव्यम् । अनया रीत्या छात्रा मातृभाषोपयोगं विनापि पाठगतानपरिचितशब्दार्थान् सन्दर्भमात्रेण ज्ञातुं पारयन्ति । अत्र च्छात्रज्ञानेन्द्रियेषु प्राधान्येन त्रिविधः संस्कारो भवति, यथा—शब्दश्रवणे श्रुतिसंस्कारः, शब्दोच्चारणे वाक्संस्कारः, चित्रवर्णाभिनयादेर्लिखितशब्दस्य चावलोकने चक्षुःसंस्कारश्च । शब्दानां कण्ठस्थीकरणेऽयं त्रिविधः संस्कारः स्मृतिसाहचर्योत्पादनेनातीवोपकारको भवति । अध्यापकेन फलके लिखिता नूतनशब्दाश्छात्रैः स्वटिप्पणीपुस्तिकासु प्रतिलेख्याः । अत्र शोधपुरस्सरनिर्दोषलेखनार्थं छात्रहस्तेष्वपि संस्कारः कार्यः । अपरिचितभाषाध्यापने पाश्चात्यभाषातत्त्वविदां मतानुसारेण शब्दार्थज्ञापनं प्रायः (१) उपरितनरीत्या प्रत्यक्षदर्शनेन (व्यवहारेण), (२) मातृभाषानुवादेन, (३) लक्षणपर्यायादिकथनेन, (४) वाक्यगतसन्दर्भेण चेति चतुर्धा विधीयते । अत्रोत्तरोत्तरस्मात्पूर्वपूर्वः प्रकारः श्रेयान्, किन्तु बालाध्यापने प्रथम एव श्रेष्ठः ।

पदपरिचयसमये शिक्षकेण छात्रैः पदानां साङ्घिकमावर्तनं द्विस्त्रिर्वा कारयित्वा व्यक्तिशः शब्दोच्चारणं कारयितव्यं छात्रमुखैः । एत-

दसकृदावर्तनं वैदिकानां वेदपठनावर्तनस्य सुतरां सादृश्यं वहति, अग्रे च च्छात्राणां संशुद्धोच्चारणाय साधुवाचनाय च कल्पते। साङ्घिकावर्तने छात्रा अन्यच्छात्रसमागमेन स्वोच्चारणस्य युक्तायुक्तत्वं परीक्षितुं शक्नुवन्ति, विश्रम्भं च लभन्ते। अतः साङ्घिकावर्तनं वैयक्तिकोच्चारणात्पूर्वं कारयितव्यमध्यापकेनेति भाषाभ्यासतत्त्वम्। साङ्घिकावर्तने प्रथममध्यापकः सुविशदं शब्दमभिदधाति, तमनु च सर्वे छात्रा यौगपद्येन तमेव शब्दं वदन्ति। एतद् वृद्धव्यवहारानुकरणरूपं कर्म प्रतिसमयं द्विस्त्रिर्वा विधीयते।

२ वाचनम्। यं विषयमुद्दिश्य शब्दपरिचयावर्तनादिरूपं मौखिकमनुष्ठानं कृतं स एव विषयः पाठ्यपुस्तके लिखितरूपेण वर्तत इति निर्देष्टुं पाठ्यमानविभागो वाच्यतेऽधुना। अत्र वाचनात्पूर्वं मौखिकावर्तनं, लेखनात्पूर्वं वाचनं चेति भाषाभ्यासतत्त्वानुसारि पौर्वापर्यं समवधेयम्। अतोऽवसिते शब्दपरिचयादौ शिक्षको यथाप्रसङ्गं व्यक्तवर्णोच्चारलय–काकु–विरामादीनि सम्यग्वाचनतत्त्वान्याश्रित्य स्वयमेवोच्चैः समग्रमध्याप्यमानपाठं वाचयति। कदाचित्तु सङ्घशश्छात्रैः सार्धं वा वाचयति। साङ्घिके वाचने तु शिक्षक उपरिदर्शितपद्धत्या पूर्वमेकैकं वाक्यं वाचयति, पश्चाच्च च्छात्राः सङ्घशः शिक्षकमनु तत्तदेव वाक्यं वाचयन्ति। पाठगतभावानुगुणं लघुगुरूच्चारण–लय–काकु–विरामादियोजनेनैव समग्रपाठार्थो मातृभाषानुवादं विनापि च्छात्रैः सामान्यतोऽवगन्तुं शक्यते। सम्यग्वाचनमेवार्थावगमस्य गमकमित्यवबुद्ध्याध्यापकेन दृढानुशीलनपूर्वकं वाचननैपुण्यं सम्पादनीयम्। केचिद्विश्वविद्यालयोपाधिधारिणोऽप्यध्यापका गद्यपद्यात्मकान् संस्कृतपरिच्छेदान् समीचीनतया वाचयितुं नेशते, किमुत च्छात्राः। अत एव सनिर्बन्धमत्रोच्यते यत्प्राचीनसम्प्रदायिनां शास्त्रिप्रवराणां परिहासं परित्यज्याऽऽङ्ग्लोपाधिधारिभिर्गीर्वाणभाषाध्यापकैस्तेषां सुमनोहरा वाचनपद्धतिरनुकर्तव्येति।

३ वाचितभागमधिकृत्य प्रश्नाः। अनन्तरं पाठसन्दर्भानुसारेण शब्दार्थयोः समुचितसाहचर्यं छात्रमनःसु सुस्थिरं भवतु, वाक्यगतान्योन्यपदकारकज्ञानेन समग्रपाठः सुविज्ञातार्थो भवतु चेति हेतोः पाठमुद्दिश्याध्यापकेन यथाक्रमं खण्डान्वयपद्धत्या प्रश्नानुष्ठानं कार्यम्। श्रुतार्थग्रहण-

-सौकर्याय यथाऽन्विताभिधानवादिनां मतमनुसरणीयं तथा लिखितार्थ-ग्रहणसौकर्याय पदबोधपुरस्सरं वाक्यगतान्योन्यपदान्वयमवगच्छतामभिहि-तान्वयवादिनां मतमप्यत्र ग्राह्यम् । इत्थमभिहितान्वयान्विताभिधान-योः समुच्चय एव बालानां सुखबोधाय श्रुतलिखितभाषाध्यापने कार्यः । लिखि-तभाषागतवाक्यबोधाय वाक्यस्थान्योन्यपदानां साकाङ्क्षत्वमन्वयश्चेत्युभयं बोद्धव्यम् । अत एव वाक्यस्थपदानां खण्डशोऽन्वयः प्रश्नोत्तररीत्या क्रियते । इयं खण्डान्वयपद्धतिराकाङ्क्षायोग्यतासंनिधितत्त्वं पुरस्कृत्य प्राचीनभारतीयदार्शनिकैरेव समुद्भाविता, विस्तरेण चानुसृता काश्मीरक-वल्लभदेवविरचितायां शिशुपालवधटीकायां नारायणविरचितायां नैषधकाव्य-टीकायां च । मल्लिनाथकृताः पञ्चमहाकाव्यटीका दण्डान्वयपद्धत्यवलम्बिन्यः। दण्डान्वयात् खण्डान्वयो बालबुद्धिबोधनविषये प्रशस्यतरः, पाश्चा-त्यानां संवादपद्धतिरिवानुयोगप्रतिवचनात्मकः प्रकारो भाषाया दृढानुशीलनार्थमतीवोपयुक्तश्च । अतोऽयं टीकाग्रन्थनिविष्टः प्रश्नोत्तररूपः खण्डान्वयो मौखिकाध्यापनेऽध्यापकैर्विस्तरेणोपयो-जनीय इत्यस्मदभिप्रायः । खण्डान्वयपद्धत्यां प्रधानवाक्यगत क्रियापदं पुरस्कृत्यैव कर्तृकर्मपदानि विशेषणाद्यवशिष्टपदानि च प्रश्नद्वारा निष्का-स्यन्ते, सुबोधपर्यायैश्च व्याख्यायन्ते । अनेनैव क्रमेण समुचितप्रश्न-विधानपूर्वकमध्यापकैश्छात्रेभ्यः पुस्तकपाठगतपदान्याश्रित्य प्रत्युत्तराणि खण्डशो लब्धव्यानि । अध्यापकेन प्रश्नाः सर्वानेव छात्रानुद्दिश्य प्रष्टव्याः, न तु विशिष्टमेव छात्रमुद्दिश्य, येन सर्वेऽप्यतन्द्रिताः स्यास्यन्ति । अत्र छात्रैर्देयानि प्रतिवचनानि सम्पूर्णवाक्यरूपाण्येवापेक्षणी-यानि । यस्मिन्कस्मिन्नपि लघुपरिमाणे परिच्छेदे बहवः प्रश्नाः सम्भवन्ति । अतः परिच्छेदबोधनार्थमस्खलितोच्चारणार्थे च प्रारम्भिकाध्यापने प्रश्न-विधानप्राचुर्यमवलम्बनीयमध्यापकेन । प्राथमिकावस्थायां यावच्छक्यं पाठ-गतपदान्युपयुज्यैव प्रश्ना विरचनीयाः, येन छात्राः प्रायः पुस्तकस्थपदान्ये-वोपयुज्य प्रत्युत्तराणि दातुं प्रभवन्ति । उपक्रमावस्थायामनया पद्धत्या पाठ्यमानपरिच्छेदो मातृभाषोपयोगं विनापि सम्यगवगतार्थो भवति । प्रारम्भे छात्राः प्रश्नकाले पुस्तकमुद्घाट्यैव प्रतिभाषन्ताम्, पश्चाच्च प्रत्युत्तर-समये तेषां पुस्तकानि पिहितानि तिष्ठन्तु । एतत्प्रश्नोत्तरविधानं शुकपठन-

बदप्रबोधभूयिष्ठमिति न केनापि मन्तव्यम्, यतश्छात्रैः प्रबोधपूर्वकं "किं प्रश्नस्वरूपं, को विषयः प्रत्युत्तरे समावेश्यः, कथं च प्रत्युत्तरे पदवाक्यादिविन्यासः कार्यः" इति निपुणं विमृश्यैव प्रत्युत्तरं देयम्। एवं याते कियत्यपि काले प्रश्नप्रतिवचनानुष्ठानस्थितं पुस्तकगतभाषानुसरणं छात्रबोधानुसारेण शनैः शनैः परित्यक्तव्यम्। यस्मिन्कस्मिन्नपि वाक्ये कर्तृकर्मक्रियाविशेषणाव्ययवाचकाः प्रश्ना यथाशक्यं सम्भवन्ति। ते च किंकथम्भूतादीनि पदानि प्रयुज्य विरचनीयाः। यथा बालाध्यापनेऽधस्तनो गणेशवर्णनपरः प्रारम्भपाठो गृहीतः स्याच्चेत्तस्याध्यापनमधोलिखितरीत्या कार्यम्।

ॐ नमः श्रीगणेशाय।

"गणेशः गणानाम् ईशः। गणेशस्य पिता शिवः माता च गौरी। गणेशस्य मस्तकं सिन्दूरेण आरक्तम्। तस्मात् मस्तकात् सुगन्धिः मदः स्रवति। अतः एव लुब्धाः भ्रमराः तद् मस्तकं परितः भ्रमन्ति। गणेशः कर्णौ इतस्ततः चालयति भ्रमरान् च अपसारयति। गणेशस्य मस्तकं रत्नयुतेन किरीटेन चन्द्रस्य कलया च भूषितम्।

"तस्य द्वौ वामौ द्वौ दक्षिणौ च इति चत्वारः हस्ताः सन्ति। ते हस्ताः सुवर्णस्य वलयैः भूषिताः। गणेशः एकेन हस्तेन अङ्कुशं, द्वितीयेन कमलं, तृतीयेन च मोदकं वहति। चतुर्थं हस्तं सः अग्रे प्रसारयति, तेन च सः भक्तेभ्यः वरं यच्छति, 'सर्वेषां मङ्गलं भवतु' इति॥"

अस्मिन् प्रारम्भपाठे विसन्धिलेखनमनुसृत्य मातृभाषायां प्रचुरतयोपयुज्यमाना एव शब्दा बुद्ध्या प्रयुक्ताः। तेषां शब्दानां वाक्यगतसंस्कृतरूपपरिज्ञानमेवात्र प्रमुखं प्रयोजनम्। परमत्र "आरक्त, परितः, इतस्ततः, वाम–दक्षिण, वलयम्" इति पदानि, "स्रवति, भ्रमन्ति, चालयति, अपसारयति, प्रसारयति, वहति, यच्छति" इति प्रत्यक्षक्रियावाचकानि पदानि च छात्राणामपरिचितानि। एतान्यपरिचितपदानि वस्तुचित्रादिप्रदर्शनेन शरीराभिनयदर्शनेन च पाठारम्भे कथितपूर्वेण साङ्घिकावर्तनादिना क्रमशो ज्ञापयितुं शक्यन्ते। ततः परिच्छेदस्याध्यापककृतात्प्रकटवाचनादनन्तरमधस्तनरीत्या प्रश्नप्रतिवचनरूपो व्यवहारः प्रचालनीयः। प्रश्नानुष्ठानेऽप्यत्र चित्राद्युपयोगः कार्यः। छात्राणामपेक्षितोत्तराणि शिक्षकस्य

विशेषविधानं चार्धचन्द्रचिह्नद्वयेस्थापितानि। यद्यपि प्रश्नोत्तराण्यत्र लेखनसङ्क्षेपार्थं न सम्पूर्णतया लिखितानि, तथापि तानि च्छात्रेभ्यः सम्पूर्णवाक्यरूपेणैव निष्कासनीयानि।

प्रश्नोत्तराणि विवरणं च। (चित्रमुद्दिश्य) कः एषः? (एषः गणेशः)। एषः केषाम् ईशः? (एषः गणानाम् ईशः।—अत्र 'गण'—शब्दमुद्दिश्य मातृभाषायामध्यापकेन किमपि कथनीयम्)। कः गणेशस्य पिता? (शिवः)। का च माता? (गौरी)।—पार्वतीत्यप्यभिधानमध्यापकेन कथनीयम्। अत्र गणेशः पार्वतीपरमेश्वरयोः पुत्रत्वं कथं प्राप्त इति पौराणिकः सन्दर्भो मातृभाषया समासतः कथनीयः। अनन्तरमारक्तो वर्णश्छात्रैश्चित्रे दर्शयितव्यः। तदनन्तरं प्रश्नः)। गणेशस्य मस्तकं केन आरक्तम्? (सिन्दूरेण)। मदः स्रवति, कस्मात्? (तस्मात् मस्तकात्)। कीदृशः मदः स्रवति? (सुगन्धिः)। भ्रमराः भ्रमन्ति, कुत्र? (तद् मस्तकं परितः।—'परितः' इत्यत्र क्रियाभिनयः कार्यः)। कथम्भूताः भ्रमराः? (लुब्धाः)। भ्रमराः लुब्धाः, कुतः? ('मस्तकात् सुगन्धिः मदः स्रवति, अतः एव' इति सम्पूर्णं कारणनिर्देशकरं वाक्यं पुनश्छात्रैरुच्चारणीयम्)। गणेशः कर्णौ चालयति, कथम्? (इतस्ततः।—अभिनयदर्शनम्)। गणेशः अन्यच्च किं करोति? (अपसारयति।—अभिनयदर्शनम्)। सः कान् अपसारयति? (भ्रमरान्)। गणेशस्य मस्तकं भूषितं, केन? (किरीटेन)। किंविशिष्टेन किरीटेन भूषितम्? (रत्नयुतेन।—'रत्नैः युतेन युक्तेन सहितेन' इति विग्रहपुरःसरं सुबोधपर्यायः कथनीयः)। पुनश्च तद् मस्तकं भूषितं, कया? (चन्द्रस्य कलया। चन्द्रकलाया आकारस्य रुचिरत्वं,किरणानां सुखशीतलत्वं चोद्दिश्य च्छात्राणां परिचितानुभवो मातृभाषायां छात्रेभ्यः प्रश्नपूर्वकं निष्कासनीयः)। गणेशस्य कति हस्ताः सन्ति? (चत्वारः। छात्रैरत्र 'एकः द्वौ त्रयः चत्वारः' इति रीत्या हस्ताः गणनीयाः)। चत्वारः हस्ताः कथं तिष्ठन्ति? (द्वौ वामौ द्वौ दक्षिणौ च इति)। हस्ताः भूषिताः, कैः? (सुवर्णस्य वलयैः।—चित्रे छात्रैर्वलयानि प्रदर्शयितव्यानि)। (चित्रमुद्दिश्य) गणेशः एतेन हस्तेन वहति, कम्? (अङ्कुशम्)। सः कमलं वहति, केन

हस्तेन ? ( द्वितीयेन हस्तेन )। सः मोदकं वहति, केन हस्तेन ? ( तृतीयेन )। सः अग्रे प्रसारयति ( अभिनयदर्शनम् ) कम् ? ( चतुर्थं हस्तम् )। तेन सः किं करोति ? ( वरं यच्छति )। स वरं यच्छति ( अभिनयदर्शनम् ) केभ्यः। ( भक्तेभ्यः )। कः सः वरः ? ( 'सर्वेषां मङ्गलं भवतु' इति।–अन्तिमं समग्रं वाक्यं छात्रैर्मातृभाषायामनुवदितव्यम्। इत्थं विशिष्टवाक्यानां दुर्बोधवाक्यानां च मातृभाषयानुवादश्छात्रावबोधपरीक्षार्थं मध्ये मध्ये समाश्रयणीयः )।

स्थालीपुलाकन्यायेन बालाध्यापने खण्डान्वयपद्धतेरुपयोजनमुपरि दर्शितम्। अत्राध्यापकेन न केवलं प्रश्नाः प्रष्टव्याः, अपि तु वाक्यगतदुरूहपदसंहतीनां सरलसुबोधसंस्कृतेनैव यावच्छक्यमर्थो विशदीकर्तव्यः। खण्डान्वयावलम्बिटीकाकृतामर्थविवृतौ यथा समासविग्रहः सुबोधपर्यायकथनममरादिकोशपङ्क्तिप्रस्तावो वाग्विशेषविवरणं तात्पर्यकथनं पौराणिकसन्दर्भकथनमित्यादयो विविधप्रकारा उपयुज्यन्ते तथैव क्रमोऽध्यापकेन मौखिकाध्यापने समवलम्बनीयः। अनया परिपाट्या वाक्यस्थान्योन्यपदानां कारकमर्थश्च सम्यक्तया छात्रैरवगम्येते। केषाञ्चिद्वाक्यरचनाविशेषाणां स्थूणानिखननन्यायेन दृढीकरणाय तत्तद्रचनाविशिष्टानि वाक्यान्तराण्युदाहृत्य तत्सदृशानां मातृभाषास्थवाक्यानां संस्कृतेऽनुवादश्छात्रैः कारयितव्यः। कदाचिदनेकवाक्यतात्पर्यबोधका एकवाक्यतासूचका व्यापकप्रश्ना विशेषतश्छात्राणां प्रौढावस्थायां प्रष्टव्याः। प्रौढच्छात्राणां पञ्चमहाकाव्याध्यापनेऽपीयमेव रीतिः प्रश्नपरिमाणं लघूकृत्य खण्डान्वयिटीकाग्रन्थानुसारेणोपयोज्या। अध्यापकेन प्रश्नाश्छात्रदृष्टिमग्रे निधाय सोल्लासं सकौशलं च प्रष्टव्याः। अध्यापने सर्वदैवाध्यापकमनोवृत्त्या तथा सोल्लासया भाव्यं, यथा सैव च्छात्रेष्वपि सङ्क्रम्य तेषामध्याप्यविषये कुतूहलमनुरागं चोत्पादयेत्। यद्यप्यध्यापने प्रश्नप्रतिवचनार्थविवृतिकर्मणि संस्कृतमेव प्रयोक्तव्यं, तथापि वाग्विशेषज्ञापनार्थं पौराणिकसन्दर्भकथनार्थं परिचितानुभवनिवेदनार्थं दुरूहकल्पनाविशदीकरणार्थं च मातृभाषापि प्रसङ्गवशेन च्छात्रबोधसौकर्याय प्रयोज्या। प्रश्ना वैविध्यपूर्णाः सुतर्कानुसारिणश्चापेक्ष्यन्ते। समुचितप्रत्युत्तराणि कैश्चिच्छात्रैः क्रमशः पुनरुच्चारणीयानि।

एवं वैयक्तिकवाक्यानां पर्याप्तं मौखिकावर्तनं भाषासंस्कारदृढत्वाय समग्रपरिच्छेदस्य साधुवाचनाय च कल्पते।

४ पुनर्वाचनम्। प्रश्नोत्तरसहकृतेऽर्थविशदीकरणे समाप्तेऽधिगतज्ञानस्य सङ्कलनाय च्छात्रचेतःसु स्थिरीकरणाय चाध्यापकेन पुनर्यथापूर्वमेवाधीतभागो वाचनीयः। आवश्यकं चेदध्यापकेन च्छात्रैः साकं पुनरपि साङ्घिकवाचनं कार्यम्। तदनन्तरं प्रत्येकं छात्रेण सकलाध्येतॄणां पुरत आगत्य समधीतपाठांशः सुस्पष्टं वाचनीयः। अत्रान्यच्छात्रैर्वाचनप्रमादपरिमार्जनं कर्तव्यं साधूच्चारणाभ्यासाय। पाठस्य मुहुर्मुहुरुच्चैर्वाचनं यावन्मात्रं विद्यार्थिभिः क्रियेत तावन्मात्रं तैर्भाषाऽवबोधपूर्वं स्वायत्तीकृता स्यात्। अपि च गीर्वाणवाण्याः श्रुतिसुखदं पदलालित्यमर्थगौरवं व्यञ्जकत्वं च तदैव प्रतीयन्ते यदाऽस्खलितव्यक्तवर्णोच्चारयुतं प्रोच्चैर्वाचनमारभ्यते। अतश्छात्रैर्मुक्तकण्ठवाचनाभ्यासो यथाक्रमं परिवर्धितव्य इत्यत्र विषये सविशेषोद्यमोऽध्यापकैरनुष्ठेयः।

५ संयोजनम्। अधिगतज्ञानस्य ध्रुवत्वापादनाय तस्यान्यस्मिन् व्यतिकरे संयोजनमपि विधीयते। तदर्थं पाठगतभाषाविशेषानवलम्ब्य च्छात्राभ्यासार्थं गद्यसमस्यापूरणात्मका अन्ये च भाषाव्यवसायाः ( Language Exercises ) उपकल्प्यन्ते, ये नात्र सङ्क्षेपेणापि वर्णयितुं पार्यन्ते।

इयमेव सामान्यतो वाङ्मयाध्यापनस्य रीतिः। अत्र संवादपद्धतिः कथनपद्धतिरनुवादपद्धतिश्चेत्येताः सकला अपि यथाप्रसङ्गं यथास्थलं च कथं प्रयुज्यन्ते तथाऽन्विताभिधानाभिहितान्वयसमुच्चयपूर्वकं खण्डान्वयपद्धतिः कथमवलम्ब्यत इति सम्यग्दृष्टं स्यात्। सृष्टिवर्णनाध्यापनमिव कथासंवादकाव्याद्यध्यापनमपि प्रागुक्तरीत्यैव विधातव्यम्। तत्तद्विषये भेदास्तावदत्र उपस्थाप्यन्ते—

कथाध्यापनम्। १ कथाध्यापनेऽपि समुचितविषयप्रस्तावरूपेण कथान्तर्गतापरिचितपदानां परिचयः कार्यः। २ पश्चादध्येष्यमाणा समग्रकथा गुरुणा साभिनयं काकुविरामपुरस्सरं च गैर्वाण्यां कथनीया। एतादृशं कथाकथनं वाचनमात्रात्सुतरां परिणामावहम्। ३ अनन्तरं श्रवणमात्रेणैव

च्छात्रैः कथा कियदंशेनावगतेत्याकलयितुं शिक्षकेण कथायाः पिण्डितार्थमुद्दिश्य त्रिचतुराः स्थूलप्रश्नाः प्रष्टव्याः। ४ तदनु पुस्तकस्था सैव कथा कथांशो वा सूक्ष्माध्ययनार्थमुपरिवर्णितरीत्या वाचनीयः शिक्षकेण। ५ अवशिष्टं सूक्ष्मप्रश्नविवरणादिकं तु पूर्वोक्तरीत्यैव विधेयम्।

नाट्यसंवादाध्यापनम्। (१) अपरिचितशब्दपरिचयरूपेण च्छात्रानुभवाश्रयिप्रश्नप्रतिवचनरूपेण वा प्रस्तावः कार्यः मातृभाषायां संस्कृते वा। (२) शिक्षककृतं परिणामावहमभिनययुक्तं च द्विर्वाचनम्। प्रथमवाचनसमये छात्रैः स्वीयपुस्तकान्यनुद्घाट्यैव केवलं श्रोतव्यम्। (३) प्रश्नविवरणानुवादादिविधानं संवादगतरचनाविशेषाणां सोदाहरणमध्यापनं च। (४) साङ्घिकं वाचनम्। (५) छात्रविहितं साभिनयं संवादवाचनम्। नाटकस्थाः संवादाः प्राय एवमेवाध्यापनीयाः।



## काव्याध्यापनम्।

### सम्प्रतितनं काव्याध्ययनम्।

आङ्ग्लपाठशालासु भूयान् कालस्तिङन्तरूपसाधनिकायामन्येषां निष्प्रयोजनव्याकरणविभागानामध्यापने शुकवत्पटने च व्यतीयते। वर्षचतुष्टयपरिमित आङ्ग्लपाठशालागतसंस्कृताध्ययने प्रायो वर्षत्रयं यावत् प्राधान्येन व्याकरणाध्ययनं व्याकरणोदाहरणपराणां त्रुटितवाक्यानामाङ्ग्लानुवादश्चेति परिपाटी पूर्वं प्रचलिताऽऽसीत्। वाङ्मयाध्ययनं प्रास्तूयत तृतीये वर्षे, यदा पञ्चतन्त्रहितोपदेशादिगद्यग्रन्थानां केचिदंशा रघुवंशसदृशकाव्यग्रन्थानां कश्चित्सर्गश्चेति वाङ्मयमध्येतव्यमासीत्। प्रारम्भे कानिचित्सुभाषितान्यप्यध्याप्यन्त, किन्तु तानि प्रायो नीत्युपदेशमात्रपराणि, न तु रसभावोद्बोधकानि। आङ्ग्लपाठशालागतस्यैतद्वाङ्मयाध्ययनस्यापर्याप्तत्वादध्येतारः पूर्वं बहिः

पाठशालायाः केषाञ्चिच्छात्रिणां सविधे वाङ्मयाध्ययननिरता अभवन् । अतः पूर्वतनाध्येतॄणां संस्कृतनैपुण्यसिद्धावाङ्ग्लपाठशालीयाध्यापनपद्धतेरल्पीयानेवांश इति सुविज्ञातं भवेत् । इदानीमियं परिपाटी किञ्चित्परिवर्तनमापन्ना विद्यते । यथा–आङ्ग्लभाषामाध्यमं विहाय मातृभाषामाध्यमं संस्कृताध्ययने प्रयुज्यते, त्रुटितवाक्यस्थले च प्ररोचककथासुभाषितप्रस्तावो बहुशः प्रारम्भत एव क्रियते । किन्तु वाङ्मयाध्ययनापेक्षया व्याकरणाध्यापन एव गरीयानाग्रहो विद्यतेऽद्याप्यदूरदृष्टीनामध्यापकानाम् । वाङ्मयबोधाय यद् व्याकरणज्ञानमनिवार्यं तस्मादप्यधिके निष्प्रयोजनव्याकरणपाठनेऽद्यापि कालयापनं विधीयते । एतत्परिपाटीफलं त्विदं यन्निष्प्रयोजनव्याकरणपठनगुरुभाराद्, वाङ्मयबोधायातिमात्रमपेक्षितं परिमितव्याकरणज्ञानमपि न स्थिरीभवति च्छात्रचेतःसु । एतावानाङ्ग्लपाठशालाध्यापकानां समादरः संस्कृतवाङ्मयाध्यापने,किमुत रसविभूतिपूर्णे काव्याध्यापने । गीर्वाणभाषाया निसर्गमाधुर्यमर्थगौरवं विविधरसभावसम्प्लुतत्वं च कदा ज्ञातव्यान्यध्येतृभिस्तेषां संस्कृताध्ययने वा कदा रुचिः सञ्जनितव्या, यदा तेषां भूरिकालं यावद्वाङ्मयेऽनधिगम्यमानाना व्याकरणरूपाणामेव पाठनं प्रचलेत् । अतो वाङ्मयबोधोपकारि तिङन्तस्थूलज्ञानसहितं सुबन्तकारकसमासतद्धित-कृदन्तादि परिमितं व्याकरणं छात्रबुद्धौ स्थिरीकृत्यानतिक्रान्त एव काले प्रथमं गद्यवाङ्मयाध्ययनं तदुत्तरं च काव्याध्ययनमारब्धव्यम् । सम्प्रति यदल्पीयः काव्यपाठनमाङ्ग्लपाठशालासु भवति तस्मिन्नपि रसग्रहणापेक्षया भाषावबोधमात्रदृष्टिरेवाधिकतरं पुरस्क्रियते ।

सूक्ष्मव्याकरणज्ञानाधिगमस्य परिणते वयस्येव सुशकत्वादाङ्ग्लमहाविद्यालयेष्वेव लघु–मध्य–कौमुद्यादिद्वारा व्याकरणाध्ययनं पाठ्यक्रमे संनिवेशमर्हति । किन्तु तत्र व्याकरणाधीतेरत्यन्ताभावे काव्यनाटकादिवाङ्मयमात्राध्ययनं प्रवर्तते । आङ्ग्लमहाविद्यालयेषु तु सर्वत्राप्याङ्ग्लभाषामाध्यममेव संस्कृताध्यापने प्रयुज्यते, येन परिणतबुद्धीनामप्यध्येतॄणां संस्कृतटीकावाचनापेक्षयाऽऽङ्ग्लानुवाद एव भूयसी रतिरिति नैसर्गिकमेव । अत्र तु लाभोऽयं यदाङ्ग्लभाषागतानां काव्यसमीक्षाशास्त्रग्रन्थानामध्ययनेन भावसङ्कलनप्रधानाया ( Synthetic ) दृष्टेर्व्यापकत्वं वैशद्यं च च्छात्रैरधिगम्येते, ययोरुपयोजनं संस्कृतकाव्याध्ययनेऽपि विधातुं शक्यते । हानि-

स्त्वेषां यदधीतिनां संस्कृतभाषाज्ञानं स्तोकमात्रमवशिष्यते, तेषां पल्लवग्राहिपाण्डित्ये रुचिर्वर्धते च ।

## प्रयोजनम् ।

काव्याध्यापने न केवलं पदकारकज्ञानं पर्याप्तम् । पदकारकज्ञानेन तात्पर्यार्थावगतिः सम्यग्वाच्यार्थबोधो वा गद्यस्यैव प्रयोजनम् । अतो विपुलगद्याध्ययनानन्तरं काव्याध्ययनं महते हिताय कल्पेत । 'वाक्यं रसात्मकं काव्यम्' इति काव्यलक्षणमधिकृत्य न केवलं तात्पर्यार्थावगमो वाच्यार्थबोधो वा, अपि तु व्यङ्ग्यार्थसूचनं नवरसाभिव्यञ्जनं चोभाभ्यामपि "सद्यःपरनिर्वृतिः" इत्येव काव्याध्ययनाध्यापनयोः प्रमुखं प्रयोजनम् । या कल्पनाशक्तिर्मनुजमात्रेऽन्तर्हिता कविजने चोद्रेकेणाभिव्यक्ता तस्याः कविवचोभिरेवोद्बोधनं, नवनवोन्मेषशालिन्या प्रतिभया प्रसादास्पदीकृतस्य कविविहङ्गमस्य भावसङ्कल्पपक्षावारुह्यालोकप्रभाभासुरेऽन्तरिक्षे सञ्चारः,—यथा, सीतारामाभ्यां सह व्योमयानमध्यास्योदधिमेखलालङ्कृतां लङ्कां परित्यज्यायोध्यानगरी गन्तव्या, रामगिर्याश्रमान्मेघदूतेन सह वा विहायसि सञ्चर्य यक्षेश्वराणां वसतिरलका गन्तव्या च विविधान् चित्तचक्षुर्दृश्यानालोकानवलोकयद्भी रसज्ञजनैरिति सकलमौलिभूतं प्रयोजनं काव्यस्य । काव्यस्य नीत्युपदेशपरं प्रयोजनं यद्यप्युररीकृतं मम्मटेन, तथापि तत् 'कान्तासम्मिततया' एव, न तु प्राधान्येनेति समवबुध्य काव्याध्यापने रसाभिव्यञ्जनपरैः सद्यःपरनिर्वृतौ चैकाग्रदृष्टिभिः काव्याध्यापकैर्भाव्यम् ।

## पद्यकाव्ययोर्भेदः ।

अत एव मर्मज्ञैः संस्कृतसाहित्यमीमांसकैः काव्यशब्दो रसदृष्टिं पुरस्कृत्यैव प्रयुज्यते । तद्दृष्ट्या गद्यं पद्यं चेत्युभेऽपि रसप्राधान्यात्काव्यकोटिमधिरोहतः, न केवलं पद्यमेव काव्यव्यवच्छेदकम् । पद्यतुन्दिलेऽपि संस्कृतवाङ्मये तत्त्वचिन्तापरा वाच्यार्थकथनबहुला अहवरछन्दोबद्धा ग्रन्था रसवैकल्यात्काव्यपदवीं नार्हन्तीति पूर्वतनसाहित्यविदामेव सिद्धान्तः । अन्यथा प्राक्तने काले बाणभट्टकृतौ कादम्बरीहर्षचरितग्रन्थौ, दण्डिनो दशकुमारचरितं, सुबन्धोर्वासवदत्ता चार्वाचीने कालेऽम्बिकादत्तव्यासविरचितः

शिवराजविजय इत्येते ग्रन्था गद्यवसनं परिदधाना अपि भूयःपरिमाणेन काव्यरससम्भृताः कथं भवेयुः ?।

## कीदृशानि काव्यान्यध्यापनीयानि ।

नीत्युपदेशः काव्याध्ययनस्य गौणं प्रयोजनमिति विज्ञाय नीत्युपदेशप्रधानानि सुभाषितानि नादावध्यापनीयानि । नीत्युपदेशपराणि सुभाषितान्येव काव्यमित्यन्यथाग्रहः परिवर्जनीयो मम्मटमतानुसारेण । सुभाषितरत्नभाण्डागारस्थानि पशुखगाद्यन्योक्तिपराणि, 'उष्ट्राणां च गृहे लग्नम्' इति परिहासविनोदपूर्णानि, सुपुत्रकुपुत्रादिविषयैकावलम्बीनि हृद्योपमादृष्टान्तादिभिः प्रपूरितानि सुबोधसुभाषितान्येव प्रारम्भ अध्ययनार्हाणि । तदनन्तरं रघुकुमारकिरातादिपञ्चमहाकाव्याध्ययनात्प्राक् तेभ्योऽपि सुगमतराणि नैसर्गिककवित्वेनोद्भासमानानि, अपाणिनीयप्रयोगबाहुल्याच्छास्त्रिभिर्गजनिमीलिकया दृश्यमानान्यपि प्रथितयशसां महाकवीनां स्फूर्तिप्रदानि रामायणमहाभारतगतानि विविधरसपरिप्लुतप्रसङ्गवर्णनानि विभिन्नर्तुमनोहरदृश्यवर्णनानि चादावेवाभ्यासमर्हन्ति । किन्तु रामायणमहाभारतस्था वृत्तान्तकथनमात्रपराश्छन्दोरूपेणावतीर्णा अपि काव्यरसवैरल्याद् गद्यसदृशा विभागा नानुशीलनयोग्याः । पञ्चज्ञानेन्द्रियग्राह्यदृश्यानां वर्णनेन सुमनोहरकल्पनाभिश्च चित्तचक्षुर्ग्राह्यां दृश्यमालामुत्पादयतां, कल्पनाप्रतिबोधजननेनान्यादृशमालोकं प्रदर्शयतां, स्थूलसृष्टिं विस्मारयतामेव काव्यानामभ्यासः श्रेयान् ।

## अध्यापनाधिकारः ।

न केवलमरसिकत्वेऽपि परीक्षोत्तरणार्थमेव साहित्यशास्त्राध्ययनं शुष्ककाष्ठभेदनमिवानुतिष्ठन्तः काव्याध्यापनेऽधिकारिणः। नैसर्गिकसहृदयत्वेन जीविते सृष्टौ च प्रतिप्रसङ्गं प्रतिस्थलं काव्यं पश्यन्तस्तद्रसं चाकण्ठं निपीयाऽऽनन्दस्य परां कोटिं गच्छन्तः, सात्त्विकभावैस्तं बहिरनुभावयन्तः, काव्यं जीवितपयोनिधिमथितं नवनीतमेवेत्याकलय्य ग्रन्थगतेऽपि काव्यरसेऽतुलां निर्वृतिमनुभवन्तः, काव्यरसाभिव्यञ्जने साहित्यशास्त्रं साधनमात्रमिति याथार्थ्यमवबुद्ध्य सहृदयतया तच्छास्त्राध्ययननिरता एव जनाः काव्याध्यापनेऽधिकारिणः । अन्येषामध्यापनं वाच्यार्थमात्रबोधनाय शुष्कपर्यालोचनाय कल्पेत, न तु रसोत्कर्षाय ।

प्रस्तावः। छात्राणां परिचितानुभवमधिष्ठाय तत्कल्पनाशक्तिप्रतिबोधजनकैः प्रश्नैः प्रस्तावः कार्यः। शक्यं चेत्प्रस्तूयमानविषयसन्दर्भानुसारेणैवाध्येष्यमाणकाव्यगतानां केषाञ्चिदपरिचितपदानामर्थः सुबोधपर्यायैर्विशदीकर्तव्यः। छात्रैर्ज्ञातपूर्वाणां विशिष्टपर्यायाणां तेभ्यो निष्कासनादनन्तरमेव तत्समानार्थानि श्लोकस्थितान्यपरिचितपदानि तैः पर्यायैः संयोज्य प्रवक्तव्यानि फलके लेखनीयानि चेत्ययमत्र क्रमः। किन्तु नूतनपदपरिचयकाले न कथमपि काव्यकेन्द्रवर्तिनी कल्पना सूचनीया। अन्यथा प्रस्तावपदस्य यौगिकोऽर्थः परिवर्तेत। प्रौढावस्थायां साङ्घिकावर्तनं चित्रोपयोगो वा नापेक्ष्यते। चित्रोपयोगः काव्यशब्दैरुत्पद्यमाने जडचित्रातिशायिनि मनश्चित्रे व्याघातं जनयति। तस्माच्चित्रोपयोगः प्रौढावस्थायां विशेषतः काव्याध्यापने परिवर्जनीयः।

वाचनम्। समुचितप्रस्तावानन्तरं पाठ्यमानकाव्यांशस्य सन्दर्भप्रसङ्गादिकथनमुखेन लय-स्वरसङ्क्रम-विरामादियोजनया भावानुगुणं विशदं वाचनं, यथाशक्यं सुस्वरं चाध्यापकेन कर्तव्यम्। शास्त्रिप्रवराणां हरिकीर्तनकराणां पुराणप्रवक्तॄणां च श्रुतिमनोहरा श्लोकपठनपद्धतिरत्र ग्राह्या। पुस्तकमाश्रित्य काव्यवाचनमित्ययं सम्प्रतितनानामध्यापकानां निकृष्टः पन्थाः। अध्याप्यमानं काव्यं कण्ठस्थं चेत्तत्पठनं सविशेषं परिणामावहं भवति। प्राचीनसम्प्रदायिनः शास्त्रिवरेण्या विपुलपद्यपङ्क्तीनां कण्ठगतत्वान्मुखपठनमात्रेणापि काव्याध्यापनेऽलङ्कर्मीणाः। अत एव तेषां पठनं ग्रन्थबन्धनं समुत्सार्य लय-काकु-विरामादिभिरनिर्बन्धं रसभावाभिव्यञ्जकं भवति। अधुनातनाध्यापकैरपीयमेव सरणिरनुसर्तव्या। वाचनं पठनं वा यथावश्यं द्विस्त्रिर्वा कार्यम्। तत्परिणामावहं चेदसंशयं काव्यस्थूलार्थप्रतीतिं जनयति।

अध्यापकस्य सुमनोहरा वाचनपद्धतिरविवादं छात्राणामनुकरणबुद्धिं प्रबोध्य तानपि सम्यग्वाचनपटून् विदधाति। अतः काव्याध्यापनात्प्रागध्यापकेन गृहे स्वयं काव्यवाचनाभ्यासः कार्यः। समग्रकाव्यांशपठनं सामान्यतोऽर्थप्रतीतिकारिण्या गत्या समं लयसमन्वितं भवतु, येन काव्यांशश्छात्रैरधिगतार्थः स्यात्। काव्यगतः स्थायिभावो व्यभिचारिभावसनाथो

घोपकारिणा '[1]अर्पणाख्य'–नाद्‌धर्मेण कथं प्रकाशनीयः, पाठ्यमानकाव्ये विशिष्टपदवाक्यांशाश्छात्रसमवधानजननार्थे कथं [2]विसर्गपुरस्सरं (वर्णाघात-पूर्वकं) सुविशदमुच्चारणीयाः, काव्यपङ्क्ताविसमाप्तायामप्यर्थावसानानुसारेण मध्येऽपि कथं [3]विरामानुबन्धौ प्रदर्शनीयौ, विविधभावानुगुणं कण्ठे कथं [4]दीपनप्रशमने सम्पादनीये, भावपरिवर्तनानुरोधेन कथं स्वरेण काकुर-भिव्यङ्क्तव्या, उच्चदीप्तमन्द्रनीचद्रुतविलम्बितादयः पाठ्यालङ्काराः समु-चितसंयोजनेन भावव्यक्तये कथमुपयोजनीया इत्यादि कृत्स्नमपि भारतीय-नाट्यशास्त्रगतपाठ्यधर्मानुरोधेन पूर्वे सम्यग्विमृश्यैव प्रकटपठनाभ्यासोऽ-ध्यापकेन गृहे कार्यः, काव्याध्यापनकाले छात्राणा पुरतः सकलं च तदा-विष्करणीयं, येन तेषां काव्यस्थूलार्थप्रतीतिः स्यात्, काव्यवृत्तचारुता यमकानुप्रासादिशब्दालङ्काराश्च च्छात्रहृदयरञ्जकाः स्युः।

स्थूलप्रश्नाः। छात्राणां काव्यस्थूलार्थप्रतीतिं परीक्षितुं द्वित्राः प्रश्नाः प्रष्टव्याः, यैर्विविक्तश्लोकसूचितः समग्रकाव्यगतो मुख्याभिप्रायोऽभिव्यक्तः स्यात्, व्यभिचारिभावसहकृत एकत्वपर्यवसायी स्थायिभावश्छात्रचित्तेषु सुस्थिरश्च भवेत्। मुख्याभिप्रायपरिज्ञानमेवाध्येतॄन् काव्यस्य सूक्ष्माध्ययने प्रवर्तयति।

सूक्ष्माध्ययनम्। सूक्ष्माध्ययनार्थं खण्डान्वयपद्धत्या रसभावपूर्णे-नान्तःकरणेन प्रश्नविवरणादिकमध्यापकेन प्रचालनीयम्। 'रमणीयार्थप्रति-पादकः शब्दः काव्यम्' इति पण्डितराजजगन्नाथोक्त्यनुसारं रमणीयार्थे

---

१ अर्पणं नाम लीलावर्णस्वरेणापूरयदिव रङ्गं यत्पठ्यते (भा. नाट्यशास्त्रम्)।

२ विसर्गो नाम वाक्यन्यासः (भा. नाट्यशास्त्रम्)।

३ अर्थसमाप्तौ कार्यवशात्र च्छन्दोवशाद् दृश्यन्ते हि एकद्वित्रिचतुरक्षरा विरामाः, 'पदवर्णसमासे च'। "समीक्ष्य वृत्ते कर्तव्यो विरामो रसभावतः। ते विरामाः स्मृताः काव्ये वृत्तपादसमुद्भवाः॥ उत्क्रम्यापि क्रमं तज्ज्ञैः कार्यास्तेऽर्थवशात्तदा॥ अनुबन्धः पदान्तरेष्वविच्छेदानुच्छ्वासनम्॥

४ दीपनं नाम त्रिस्थानशोभि वर्धमानस्वरञ्च। प्रशमनं नाम तारं गतानां स्वराणामवैस्वर्येणावतरणमिति॥ (भा. ना. शास्त्रम्)

व्यङ्ग्यार्थं वा प्रतिपादयितुमर्थानुसारिणः शब्दाः कथं काव्ये प्रयुक्ता इति शब्दार्थोभयदृष्टिमाश्रित्य छात्राणां कल्पनाशक्तिं प्रस्फोरयन्तो रसभावोद्बोधकाः प्रश्ना विरचनीयाः, न पदकारकबोधमात्रपराः। काव्यरसग्रहणं पदकारकबोधमवलम्बत एव, किन्तु विपुलवाङ्मयाध्ययनेन छात्रहृदयेषु परिपाकं प्राप्त एव कारकज्ञाने काव्याध्ययननारम्भणीयम्। अस्मिन्नवसरेऽपेक्षितमपि तज्ज्ञानं काव्यरसग्रहणापेक्षया गौणत्वं भजते। कारकबोधः काव्याध्ययने रसभावकल्पनादिकमग्रे प्रस्थाप्यैव स्वयं साधनभूतः सन् कृतार्थीभवति। अतः प्रश्नविवरणादिकं प्राधान्येन रसभावकल्पनाभिव्यञ्जकं यया परिपाट्या भवेत्तैव काव्याध्यापनेऽङ्गीकर्तव्या।

शास्त्रिवरेण्यानां काव्याध्यापनशैली प्रायो रसोद्वाहिनी, यतस्तेषां प्रगाढवाङ्मयाध्ययनं मनःसमाधिमाधायोन्नताभिरुचिमुत्पाद्य च तांस्तादात्म्योत्साहसम्पन्नानिवाध्यापनकर्मणि नियोजयति। विपुलवाङ्मयास्वादजनितमध्यापकगतं तादात्म्यमध्येतृष्वपि प्रतिफलितं भूत्वा तेषां वाङ्मयाभिरुचिं संवर्धयति। लोकशास्त्रकाव्याद्यवेक्षणाल्लब्धा निपुणता काव्यज्ञशिक्षयाऽभ्यासश्च शक्तिसहकृतौ यथा कवेः काव्योद्भवे तथा व्याख्यातुरपि सरसव्याख्यानकौशले हेतुः। 'क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे' इत्युक्त्यनुसारेण रसविदो व्याख्यातुर्माहात्म्यमेवात्र हेतुः, रीतिरकिञ्चित्करेति यद्यपि सत्यं,तथाप्यावेदनरीतिज्ञानं प्रज्ञावतोऽध्यापकस्योपोद्बलकं,न तु हानिकरमिति—

> शिष्टा क्रिया कस्यचिदात्मसंस्था सङ्क्रान्तिरन्यस्य विशेषयुक्ता।
> यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव॥

इत्येतस्मात्कालिदासवचनात्सिध्यति। पूर्वतनानां शास्त्रिवराणां विततं ज्ञानं संस्कृतिसूचकानां विविधपौराणिकसन्दर्भाणां प्रपूरणे पर्याप्तम्। मनोविनोदनपराणां कथादृष्टान्तादीनां प्रकृष्टावगाहनवशात्तेषां काव्यविवरणोपयुक्तं कथनकौशलमपि छात्रान्मन्त्रमुग्धानिव चित्रविन्यस्तानिव करोति। अतस्तेषां काव्यपाठनमतितरां निर्वृतिमादधदध्येतृहृदयेषु स्मृतिसाहचर्योत्पादनेन चिरसंस्कारकरं भवति। आधुनिकमनोविज्ञानानवगतावपि ते मनोविज्ञानाधिष्ठितान्येवाध्यापनतत्त्वान्यबोधपूर्वमेव केषुचित्स्थलेषु परिपालयन्तीत्यत्र विषये प्रत्यक्षविद एव प्रमाणम्।

किन्तु तेषामध्यापनमिदानीन्तने काले कथनैकपरिपाटीमेवावलम्बते, न तु प्रश्नोत्तरपरिपाटीम् । तैः कथनप्रधानां दण्डान्वयपद्धतिं हित्वाऽऽधुनिकसंवादपद्धतेः साधर्म्यमापन्ना प्राच्यैरेवोद्भाविता प्रश्नोत्तरप्रधाना खण्डान्वयपद्धतिरध्यापने समाश्रयितव्येति साधीयान् पन्थाः । यतो दण्डान्वयपद्धतेर्मौखिकाध्यापनेऽनुसरणं—

पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ।
आक्षेपोऽथ समाधानं व्याख्यानं पञ्चलक्षणम् ॥

इति रीत्या यद्यपि सम्यग्बोधाय कल्पते, तथापि तत् पदच्छेदकरां समासविग्रहादिपरां कर्तृकर्मक्रियाद्यन्वयभूयिष्ठां व्याकरणदृष्टिमेवाग्रे निधाय काव्यरसशोषण एव पर्यवस्यति । काव्याध्यापने खण्डान्वयपद्धत्या विरचिताः प्रश्नास्तु कर्तृकर्मादिव्याकरणसंज्ञानुच्चारेऽपि 'किमो रूपं पुरस्कृत्य' द्रव्यगुणजातिक्रियादिवाचका विधातुं शक्यन्ते, येन प्रश्नसंसूचितद्रव्यगुणक्रियादिद्वारैव वाक्यगतपदानां कर्तृकर्मक्रियाबोधश्छात्रमनस्सु स्वयमेवाविर्भूय, बोधप्ररोचनपूर्वकप्रत्युत्तरदाने तन्मतिं नियुज्य च शनैः शनैः काव्यरसं समुल्लासयतीति प्रयोगनिपुणानामध्यापकानामनुभूतिः । अतः खण्डान्वयपद्धतिर्न केवलं पदकारकबोधाय, अपि तु पदान्तर्हितव्यञ्जनासंवेदनाय रसोद्बोधाय च कल्पते । काव्याध्ययने पदकारकबोधो रसास्वादश्चान्योन्यावलम्बिनौ सन्तौ समकालमेव प्रतीतिविषयत्वं गच्छतः, शब्दार्थयोर्नित्यसाहचर्यात् । तस्मान्मीमांसकरीत्याऽऽदौ क्रियावाचकपदं गृहीत्वैवाऽऽकाङ्क्षायोग्यतासन्निधिबलेन तत्सम्बद्धानि कर्तृकर्मादिवाचकपदानि तत्तद्विशेषणानि क्रियाविशेषणादीनि च यथोत्तरं छात्रेभ्यो निष्कासनीयानि, तेषां समुचितविवरणं च रसदृष्ट्या कार्यम् । संस्कृतवाक्ये तु प्रायो गुणवाचकपदप्राचुर्यान्मुहुर्मुहुः पृष्टाः 'कीदृश'–शब्दनिबद्धाः प्रश्नाश्छात्राणां शिरोवेदनां जनयिष्यन्तीत्यतः 'कीदृश'–शब्दस्थाने 'किम्भूत–कथम्भूत–किंविशिष्ट–किंलक्षण'–इत्यादीनि पदानि प्रश्नेषु यथारुचि प्रयोक्तव्यानि । प्रदीर्घसमासस्थलेष्वपि खण्डान्वयमुखेन चतुरप्रश्नविधानेन पदविग्रहपूर्वकं तत्तत्पदानां समुचितसुबोधपर्यायाः कथयितुं शक्यन्ते । विशेषतोऽत्र ज्ञातव्यं यत्काव्याध्यापने विच्छेदकदृष्टेरपेक्षया भावैकत्वपर्यवसायिनी सङ्कलनदृष्टिरेव रससम्पदं वर्धयतितरामित्य-

नुभवाधिष्ठितः सिद्धान्तः । वैयक्तिकश्लोकस्य रसालङ्कारविवरणात्समग्र-काव्यपरिच्छेदस्य सङ्कलितसंवेदनमेव रुचिरतरम् । अत एव मुख्याभिप्रायं रसदृष्टिं च प्रमुखीकृत्य शब्दार्थयोः समुचितशाहचर्यविषये प्रश्नविवरणादिक-मपेक्ष्यते । तदर्थमेव शब्दस्पर्शरूपरसगन्धसंवेदनं काव्यगतपदसूचनेन पुनरु-द्भावयन्तश्चित्तचक्षुर्गोचराया दृश्यसन्ततेरुत्पादने समर्थाश्च प्रश्ना विरच-नीयाः । भवतु नाम प्रश्नानां कार्यकारणबोधकं तर्कानुसारित्वं, किन्तु तर्कोऽत्र काव्यकल्पनावशग एव रससाहाय्यमाचरन् काव्यसौन्दर्याभिव्यञ्जनाय भवतु, न तु रसविघाताय ।

काव्याध्यापने न केवलं प्रश्नाः प्रष्टव्याः, किन्तु कथनपरिपाटीमाश्रित्य लयकाकुविरामाद्यलङ्कृतेन संस्कृतभाषणेन सोत्साहं रसभावकल्पनाप्रति-बोधकरं मनश्चित्रमालाजनकं विवरणमपि कार्यम् । प्रश्नप्राचुर्यं काव्यविच्छेदने पर्यवस्यद्रसोत्कर्षं प्रतिबध्नाति । कथनातिरेकस्तु कविवचनसौन्दर्यं निह्नुत्य च्छात्राणां तन्द्रिलत्वमुत्पादयति । छात्रैः सम्यगवबुद्धायां काव्यकल्पनायां विवरणकथनयोः पौनःपुन्यातिरेकः कदाचिद्रसप्रवाहं स्तभ्नाति, कविवचन-वपुषो मूलसौन्दर्यं चावृणोति । अतः 'नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते' इति मल्लिनाथोक्तिमनुसृत्य कव्युक्तपदवैदग्ध्यं यया प्रश्नकथनप्रणाल्या प्रकाश्येत सैवाध्यापकेन मौखिकाध्यापनेऽङ्गीकार्या । कथनप्रणाली प्रश्नप्रणाली चेत्येतयोः समन्वयेन कविवचनं पुरस्कृत्यैव प्रश्नमुखेन विहितं विवरणं यशस्वितामाप्नोतीति न कदापि विस्मरणीयम् । अध्याप्यमानकाव्यद्वारा कवेरेव च्छात्रैः सार्धं विश्रम्भालापो भवतु, न स स्वीयभाषणाधिक्येना-ध्यापकेन प्रतिष्टम्भितव्य इति सारः । विवरणसमये दुरूहस्थलेषु विशिष्ट-स्थलेषु च पौराणिकसन्दर्भप्रपूरणाय प्रासङ्गिकविषयावेदनाय सामान्यज्ञान-संवर्धनाय च मातृभाषोपयोगोऽनिर्बन्धं कार्यः, यतश्छात्रसुबोधसिद्धिरेवा-ध्यापनस्य परमं प्रयोजनम् ।

शास्त्रिणो वैयक्तिकश्लोकव्याख्यानं यथा पदपदार्थविवृतिपुरस्सरं कुर्वन्ति तथा पूर्वोत्तरश्लोकयोरन्योन्यसम्बन्धसिद्धयेऽपि तयोर्मध्ये टीकाग्रन्थानु-रोधेनावतरणिकामुपन्यस्यन्ति । एषाऽवतरणिकोत्तरश्लोकाभिप्रायं संसूच्य तद्विषये जिज्ञासां चोत्थाप्य श्लोकरूपाणां विविधावयवानामन्योन्यसङ्घटनेन

समुचितविन्यासं साधयन्ती चित्तचक्षुषः पुरतोऽखण्डार्थरूपं रसवपुः संस्थापयति। एतदीपद्विच्छेदनसहकृतमर्थसङ्कलनं काव्यरसावगाहनस्यातीवोपकुरुते। तस्मादेतट्टीकाग्रन्थस्थं शास्त्रिभिरनुसृतं चावतरणिकापूरणमाधुनिकाध्यापकैरप्युरीकर्तव्यम्। आदावध्यापकेन प्रत्येकश्लोकविवरणारम्भेऽवतरणिकामुपन्यस्य पूर्वोत्तरश्लोकयोः सम्बन्धः सङ्घटनीयः, तदनन्तरमध्याप्यमानश्लोकस्य प्रश्नविवरणसमाप्तौ तं श्लोकं पुनरप्यर्थप्रतीतिस्थैर्याय वाचयित्वा तदुत्तरश्लोकावतरणिका प्रस्थाप्या, तदनु पुनर्विवरणमारम्भणीयमिति सामान्यः पन्थाः। मुख्याभिप्रायमनुरुध्य काव्यपरिच्छेदगतानां विविक्तश्लोकानामुपरिवर्णितमध्यापनमेव सुकुमारमतीनामध्येतॄणां समीचीनबोधकरं भवति।

कवेः कल्पनावैभवं वर्णनचातुर्यं रसप्रकर्षोऽलङ्कारयोजना पदलालित्यमिति विविधदृष्टीरङ्गीकृत्य स एव काव्यपरिच्छेदः पुनः पुनरप्यध्येतुं शक्यते। अस्मिन् व्यतिकरे काव्यपरिच्छेदस्थितानां श्लोकानां पूर्वापरक्रमं परिवर्ज्य तां तामुपरिदर्शितदृष्टिमनुरुध्यैव यद्यद् वस्तु परिच्छेदे लभ्यते, तस्य तस्य सङ्कलनाय प्रश्नविवरणाद्याश्रीयते। एवं कल्पनावैभवदृष्ट्या वर्णनचातुर्यदृष्ट्या वा सञ्जाते प्रश्नविवरणादौ, रसप्रकर्षविषयिण्या पदलालित्यसम्बन्धिन्या वाऽन्यदृष्ट्या प्रश्नविवरणादिभिः समग्रपरिच्छेदेऽधिगम्यमानानि वस्तूनि सङ्कल्यन्ते। इत्थं प्रभिन्नदृष्ट्यवलम्बेन स एव काव्यपरिच्छेदस्तत्तद्विशिष्टवस्तूपलब्धये मुहुर्मुहुश्छात्रैर्वाचनीयः। एतादृशे काव्याध्ययने सङ्कलनदृष्टिरेव प्रधानपदं लभते; परमनधिगतकाव्यार्थानामनधीतकतिपयकाव्यानां सुकुमारमतीनां छात्राणामियं पद्धतिर्नोपकारिणी भवेत्। अभ्यस्तपर्याप्तकाव्याः परिणतमतय एव शिष्या ईदृशाध्ययनकर्मणः शक्ताः सन्तो महान्तं लाभमावहेयुः। तस्मात्कञ्चित्कालं श्लोकक्रमानुसारेणैव काव्यमध्याप्य सञ्जातपर्याप्ताभ्यासानामेव च्छात्राणामध्यापनेऽयं पन्थाः समाश्रयणीयः।

अलङ्कारज्ञानम्। प्रारम्भिकाध्यापने वृत्तालङ्कारज्ञानं नापेक्ष्यते, किन्तु च्छात्राणां प्रौढावस्थायां काव्यविवरणप्रसङ्गतस्तद्यथावकाशं स्तोकमात्रं वितीर्य शनैः शनैः परिवर्धनीयम्। उपमाऽनन्वयरूपकभ्रान्तिमदपह्नुत्युत्प्रेक्षा-

दृष्टान्तव्यतिरेकाप्रस्तुतप्रशंसाश्लेषार्थान्तरन्यासादयः केचिद्विशिष्टालङ्कारा अध्याप्यमानकाव्यसन्दर्भानुरोधेनैव बोधनीयाः। उदाहरणभूतश्लोकस्थमुपमानोपमेयवाचकपदानां सादृश्यं तुल्यकक्षत्वं वा समुचितप्रश्नैश्छात्रेभ्यो निष्कास्य, उपमेयपदान्युपमानपदानि च स्तम्भद्वये समानपङ्क्तावेव फलके विलिख्य साधर्म्यं विशदीकर्तव्यम्। एवं विपुलोदाहरणैः परिचयं प्रापिते साधर्म्ये केनचित्कालेनालङ्काराभिधानलक्षणानि क्रमशोऽल्पाल्पमात्रया कथयितव्यानि। अधिगते चावसरे साधर्म्यमूलकालङ्कारभेदाः समानोपमानोपमेययोर्विभिन्नभङ्ग्यैव कथमुत्पद्यन्त इत्यपस्तनोदाहरणैः पृथक्कृते पाठे व्याख्येयम्।

यथा—'मुखं कमलमिव' (उपमा), 'मुखं मुखमिव' (अनन्वयः), 'मुखमेव कमलम्' (रूपकम्), 'कमलमिति भ्रमरा मुखमनुधावन्ति' (भ्रान्तिमान्), 'इदं कमलं, न मुखम्' (अपह्नुतिः), 'नूनं मुखं कमलं मन्ये' (उत्प्रेक्षा), 'जले कमलं, स्थले तव मुखम्' (दृष्टान्तः), 'मुखं कमलादतिरिच्यते' (व्यतिरेकः) इति। स्थालीपुलाकन्यायेन पाठशालायामेतावतैवालङ्कारज्ञानेनालम्। इयमीषदलङ्काराभिरुचिर्महाविद्यालयेष्वेव समुचितवेलायां काव्यप्रकाशादिग्रन्थगतालङ्काराणां सूक्ष्माभ्यासेन वृद्धिं प्राप्नुयात्।

वृत्तज्ञानम्। वृत्तज्ञानविषये तावद् वृत्तनामकथनमात्रान्नाधिकं किमपि काव्यरसग्रहणसमये कर्तुमिष्यते, यतो वृत्तलक्षणादिविवेचनेन काव्यरसोद्बोधो निरुद्धो भवतीत्यनुभवः। अतः पृथक्तया मातृभाषयैव बहूपयुक्तवृत्तलक्षणान्यध्याप्यानि, मातृभाषायामपि संस्कृतवृत्तानां प्रयोगप्राचुर्यात्। स्वतन्त्रे पाठे 'यमाताराजभानसलगाम्' इति पङ्क्तेः साभिप्रायत्वं लघुगुरुक्रमेण गणपरिगणनोपयुक्तत्वं च विशदीकृत्याक्षरसङ्ख्यानुसारेण "अनुष्टुम्—आर्या—उपजाति—द्रुतविलम्बित—भुजङ्गप्रयात—वसन्ततिलका—मालिनी—पृथ्वी—मन्दाक्रान्ता—शिखरिणी—हरिणी—शार्दूलविक्रीडित—स्रग्धरा—" इत्यादीनां प्रचुरप्रयोगाणां वृत्तानां गणनिरूपणं छात्रैः कारयितव्यम्।

वृत्तयोजनाविवरणम्। अर्थानुसारिण्यास्तु वृत्तयोजनाया विवरणं काव्यरसग्रहणकालेऽपि रसाभिरुचिवर्धनपुरस्सरं विधातुं शक्यते। यथा—

कुमारसम्भवे 'अस्त्युत्तरस्यां दिशि देवतात्मा' इत्यादिश्लोकेषु गुरुवर्ण-प्राचुर्येण नगाधिराजस्य हिमवतो गुरुत्वविस्तीर्णत्वे कथमभिव्यज्येते, मेघदूते वा मन्दाक्रान्तावृत्तं यक्षहृदयस्थं विप्रलम्भजनितं जडिमानं कथं द्योतयतीति विवरणसमेतया विशिष्टपठनशैल्या ज्ञापनीयम् ।

यथा वृत्तस्यार्थानुसारित्वं तथा विशिष्टवर्णसंहतेः समुचितार्थसूचकत्वं पदलालित्यं वा सुविशदपठनपूर्वकं प्रदर्शयितुं पार्यते । यथा कुमारसम्भवे—

यः ≍ पूरयन्कीचकरन्ध्रभागान्दरीमुखोत्थेन समीरणेन ।
उद्गास्यतामिच्छति किंनराणां तानप्रदायित्वमिवोपगन्तुम् ॥

इति श्लोके 'पूरयन्' इत्यस्मात्पदात्पूर्वमुपध्मानीयप्रयोगोऽवशिष्टे भागेऽनुनासिकप्रयोगश्च पवनाध्मानं पवनध्वनिमपि कथं सूचयतः, तथा—

कपोलकण्डू ≍ करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्रुतक्षीरतया प्रसूतस्सानूनि गन्धस्सुरभीकरोति ॥

इत्यत्र ककारटकारयोर्जिह्वामूलीयस्य संयुक्तवर्णानां च प्रयोगः करिणां कपोलघर्षणे दृढत्वं, कण्डूसंवेदनाया असहनीयत्वं, द्वितीयपङ्क्तौ च रकारो वृक्षक्षीरस्य झटिति बहिर्गमनं, तदुत्तरं सकारो वातप्रेरितं गन्धप्रसरणं च कथं व्यञ्जयन्तीत्यादिरीत्या कृत्स्नमपि वर्णविन्यासवैदग्ध्यं प्रदर्शनीयम् । तथा मेघदूते च—

सङ्गीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम् ।

इत्यस्यां पङ्क्तौ पठ्यमानायां 'सङ्गीताय' इति पदेऽनुस्वारेण मधुरगीतं श्रुतिपथमायातीव, तथा 'प्रहत' इति पदेन सङ्गीतसहकारिणि मृदङ्गे कराघातः, तमनु 'स्निग्धगम्भीरघोषम्' इति पदेन मृदङ्गान्निष्पद्यमानो ध्वनिः श्रूयत इवेति प्रकटपठनपुरस्सरं प्रदर्श्य तत्र च्छात्रावधानं समाकर्षणीयम् । एवं यमकानुप्रासयुक्तान्यनुकरणवाचकानि च पदानि विशेषतोऽवधानमर्हन्ति । तथा च समुचितपदप्रयोगपूर्वकं कविः कथं शब्दचित्रमालामुत्पादयतीत्येतदपि प्रश्नविवरणैः सङ्कलनदृष्ट्या रसोत्कर्षसिद्धये पाठयितव्यम् ।

**पुनर्वाचनम्** । एवं सप्रश्नविवरणात्सूक्ष्माध्ययनादनन्तरं सकलस्याप्यधीतकाव्यांशस्य संहतपरिणामनिष्पत्तयेऽध्यापकेनादौ तदुच्चैः पठनीयं

यथाशक्यं सुस्वरं गेयं वा। तदनु तेन च्छात्रैः सार्धं स एव काव्यांशः सङ्घशः पठनीयो गेयो वा, येन काव्यार्थसौरभं स्वरमाधुर्येण सार्कं तेषां स्मृतिसम्पुटमभिव्याप्यताननुरणनकर्मणि नियोजयेत्, मृच्छकटिकनायकेन चारुदत्तेन समं च —

तं तस्य स्वरसङ्क्रमं मृदुगिरः श्लिष्टं च तन्त्रीस्वनं
वर्णानामपि मूर्छनान्तरगतं तारं विरामे मृदुम्।
हेलासंयमितं पुनश्च ललितं रागद्विरुच्चारितं
यत्सत्यं विरतेऽपि गीतसमये गच्छामि शृण्वन्निव॥

इति रीत्या तान् सञ्जातसंवेदान् विदध्यात्।

इत्थमेकस्मिन्पाठे त्रिचतुराः श्लोकाः समाप्यन्ते। काव्यपरिच्छेदः प्रदीर्घश्चेत्तस्य यथोचितखण्डान् परिकल्प्य प्रतिपाठं ते ते खण्डा उपरितन-प्रश्नविवरणरीत्या समाप्याः। आदिमे पाठे समग्रपरिच्छेदस्य स्थूलबोधं विधाय पश्चात्प्रतिपाठं नूतनश्लोकाः पूर्वश्लोकैः सह प्रश्नकथनपूर्वकं संयोज्याः। एवमवस्थिते समग्रकाव्यपरिच्छेदाध्यापनेऽध्यापकः पुनरावृत्तिपाठेनावशिष्टं छात्रबोधवैकल्यं परिहर्तुं व्यवस्येत्।

## नाटकाध्यापनम्।

नाटकस्य दृश्यकाव्यान्तर्भूतत्वात्तदध्यापनमपि पूर्ववर्णितरीत्यैव प्रायः कार्यम्। विशेषस्त्वयं यन्नाटकस्य सूक्ष्माध्ययनात्प्राग् हृदयहारिण्या सरण्या नाट्यकथावस्तुपरिचयो मुखतो विधातव्यः, येन ज्ञातपूर्वे नाट्यसंविधानके छात्राणामन्तःकरणेषु सामग्र्येण विस्पष्टत्वेन च स्थिरीभूय बोधरुचिपुरस्सरे सूक्ष्माध्ययने तान् प्रवर्तयेत्। नाट्यवस्तुकथनमनु प्रतिसमयमध्येयान्नाटकखण्डान् परिकल्प्य ते पृथक्पृथक् कथितपूर्वान्नाट्य-शास्त्रगतपाठ्यधर्माननुसृत्य विविधपात्रस्वभावानुगुणं सकौशलं प्रतिपाठं वाचनीयाः। नाटकाध्यापने सम्यग्वाचनस्येयती महती यद्विवरणं विनापि समीचीनवाचनमात्रेण प्रायो नाट्यविभागाः स्थूलत्वेनावगतार्था भवन्ति। अतोऽत्र विषयेऽध्यापकैरादौ सविशेषोद्यमः कार्यः। तदनु प्रश्नविवरणादीनि यथापूर्वमेवानुसर्तव्यानि। कथावस्तुक्रमान्नाट्यप्रवेशादिक्रमः कथं भिद्यते, कथं च परिणामावह इत्यपि विवरणसमये विवेक्तव्यम्। सूक्ष्माध्ययने ते

ते पात्रस्वभावविशेषा नाट्यप्रवेशानुरोधेन च्छात्रेभ्यः प्रश्नद्वारा निष्कासनीयाः, अध्यापकेन स्वयमपि कथनीयाः । समाप्ते तस्मिंस्तस्मिन् परिकल्पितखण्डाध्ययने प्रतिसमयं पुनर्वाचनमिष्यत एव । सत्यवसरे छात्रैर्विविधभूमिकाः परिगृह्य समुत्कृष्टप्रवेशा नाटयितव्याः, येन तेषां भाषाज्ञानं रसभावसंवेदनं च परिपाकं प्राप्स्येते ते च संस्कृतसंभाषणनिपुणा अपि सम्पद्येरन्। एवमवसिते समग्रनाटकाध्ययने प्रत्यङ्कमुपलब्धा विशिष्टपात्रस्वभावविशेषाः पर्यालोचनपुरस्सरं छात्रसाहाय्येन मुखतो लेखनतश्च सामग्र्येण सङ्कलनीयाः । प्रतिपात्रममुमेव विधिमनुसृत्य तत्तत्स्वभावविशेषाणामन्योन्यपोषकत्वं प्रदर्शनीयम् । एतत्तु संस्मरणीयं यन्नाटकाध्यापनमपि श्रव्यकाव्यमिवावयवविच्छेदनविरहेण रसप्रधानां सङ्कलनदृष्टिं पुरस्कृत्यैव भवतु ।

## उपसंहारः ।

काव्यपुरुषस्य रसरूपमात्मानं, शब्दार्थरूपं शरीरं, रीतिरूपमवयवसंस्थानविशेषमुपमानुप्रासादिरूपानलङ्कारान् छन्दोरूपां गतिं चोद्दिश्य विहितानि प्रश्नविवरणानि शश्वदेव तत्सौन्दर्यनिर्वर्णने प्रचीयमानामभिरुचिं सम्पादयन्ति, अलं भूयसा, कवेर्निगूढान्तःकरणतत्त्वमेवावगाहन्ते च । किन्तु रसरूपमात्मानं हित्वाऽन्यः सकलोऽपि च्छन्दोरीत्यलङ्कारादिनिरीक्षणव्यापारो विवेचकबुद्धितन्त्रत्वात्परिणतप्रज्ञानामेवाध्येतॄणामध्यापने पदमर्हतीति न कदापि विस्मर्तव्यम् । यथा पाठशालाध्येतॄणां बालानां तथा महाविद्यालयस्थानां प्रौढच्छात्राणामध्यापने रससाधारण्यं नान्तरीयकमेव । तथापि च्छन्दोऽलङ्कारादिविवेचनं शिष्यबुद्धिवृद्ध्यनुरोधेन यथोत्तरं संवर्धनीयं, न त्वेकपदे । शास्त्रिपद्धतौ काव्याध्ययनानन्तरं साहित्यग्रन्थपठनपुरस्सरं यथा छात्राः काव्यस्यालङ्कारगवेषणाशीला अक्रियन्त, तथाऽधुनापि महाविद्यालयेषु क्रियन्त एव । किन्तु विच्छेदकबुद्धिनिष्ठमलङ्कारपरिज्ञानं रसतत्त्वप्रधानस्य साहित्यशास्त्रस्यैकतममङ्गमेव सन्न सामग्र्येण काव्यरसग्रहणायालम् । अतः प्रौढच्छात्राध्यापनेऽपि मनोविज्ञानानुसारेण भावैकतत्त्वं समवलम्ब्य संश्लेषणदृष्ट्यैव काव्यविवरणमिष्यते, न त्वलङ्कारभेदनिरूपणपरया विश्लेषणदृष्ट्या । विहितमप्यलङ्कारविवरणं काव्यगतस्थायिभावाभिव्यक्तेः साधकं भवतु, न तु बाधकम् ।

बालाध्यापने पुनरेतद्विवेचनं पाठशालासु लभ्यमानं संस्कृताध्ययनकालावधिमवलम्बते, न च सकलमपि तत्र सम्पूर्णत्वेन विधातुं शक्यम्। अतः प्रथितयशसां महाकवीनां काव्येभ्यः समुत्कृष्टावतरणानि सङ्गृह्यैव तेषामध्यापनं पाठशालासु विधेयम्। सर्गद्वयात्मकमपि काव्यमुपरिदर्शितरीत्याऽध्याप्येत चेदन्वर्थं काव्यरसानुरागं जनयेत्, व्यासवाल्मीकिकालिदासभवभूत्यादीनां चिरन्तनवाग्रसधाराया अविकलास्वादनाय च्छात्रान् प्रवर्तयेदित्यत्र न कापि विप्रतिपत्तिः सम्भाव्यते। अपि च खण्डान्वयपद्धत्या संस्कृते विहितं मौखिकविवरणं तादृशलिखितविवरणप्रधानानां टीकाग्रन्थानां वाचने कुतूहलमुत्पाद्य तत्साहाय्येन च्छात्रांष्टीकानुशीलनपरान् पूर्वतनशास्त्रिशिष्यानिव स्वयमेवार्थनिर्धारणाभिमुखान् कुर्यात्। समासतो वक्तव्ये सति, गीर्वाणभारत्यां तद्गतविशालवाङ्मये च कियद्भाववैविध्यं, कियान् रसप्रकर्षः, कियद्वर्णमाधुर्यं, कियान् पदवाक्यपाकः, कियद्वा रीतिवैचित्र्यमित्यत्र विषये स्थालीपुलाकन्यायमनुसृत्य समुत्कृष्टावतरणाध्ययनेनापि पाठशालाछात्रहृदयेषु यदीषदुद्बोधः स्यात्तदा काव्याध्यापनमसंशयं साफल्यमियात्।

पुनरेकस्यैव कवेः काव्यकृतिषु रतिविलापाजविलापयोरिव प्रसङ्गवर्णनादिसादृश्यं विभिन्नसन्दर्भानुसारेणापि कथमुपलभ्यते, समानप्रसङ्गमधिकृत्य प्रभिन्नकविकृतिषु कुन्दमालोत्तररामचरितयोरिव कथं भेदसाम्ये परिलक्ष्येते, शकुन्तलादुष्यन्तयोर्मालविकाग्निमित्रयोरुर्वशीपुरूरवसोरिव नायिकानायकयो पूर्वरागो विशिष्टकविना विविधकविभिर्वा कथं प्रदर्शितः, कविविशेषस्य प्रकृतिवर्णनविषये किं प्रवृत्तिवैशिष्ट्यं मनोऽधिष्ठानं वा, कश्च तस्य जीवितत्त्वालोक इति विविधविषयान् परिलक्ष्यीकृत्य काव्यनाटकादिसमीक्षाऽनुष्ठातुं शक्या। नाटकसमीक्षायां पुनर्नाट्यवस्तुनः पुरातनकथावलम्बः कल्पितत्वं वा, पुरातनकथावलम्बेऽपि कवेरसाधारण्यं प्रतिभानवत्वं वा, नाट्यगतघटनासिद्धयेऽपेक्ष्यमाणा कालमर्यादा, नाट्यकवेरुपलभ्यमानमितिवृत्तं, तत्कालीना समाजस्थितिः, नाटकस्थरसानां कथोपकथानां चाङ्गाङ्गिभावः, नाट्यशास्त्रनियमानां कविकृतं परिपालनमतिक्रमणं वा, कविकृतौ प्रतीयमानस्य जीविततत्त्वालोकस्यान्यकविभ्यो वैशिष्ट्यमिति विविधविषया अपि विवेचनार्हा भवन्ति। एषा समग्रकृतिसमीक्षा विविक्तश्लोकालङ्कारादिकथनाद् भिन्ना

सती भावसंश्लेषणमेवाधिकतरमधिष्ठाय कविचित्तावगाहनौपयिकी भवति। परमेषा महाविद्यालयीनप्रौढच्छात्रेष्वेव युज्यते, न बालेषु। पूर्ववर्णितरीत्या सञ्जाते काव्याध्यापने छात्रा वयोवुद्धिविकासानुरोधेन निसर्गत एवोपरिवर्णितायां काव्यसमीक्षायां सम्प्रवृत्ताः स्युः। कविकालनिर्णयः, कवीनां पूर्वोत्तरभाव इत्यादयो विषया अमन्दमतिप्रयत्ना ऐतिह्यदृष्ट्या चोपयुक्ताः सन्तोऽपि कविहृदयसमीक्षापेक्षया बहिरङ्गभूताः काव्यरसपिपासूनां रसास्वादप्रत्यूहपरा विफलकालयापनकराश्च। कविकालीनायाः समाजस्थितेः संस्कृतेश्च काव्योपलब्धसन्दर्भैर्निरीक्षणं तु कविव्यक्तित्वनिदर्शनोपकारकमपि विवेचकबुद्धिनिष्ठमेव। अतः कविचित्तावगाहननिष्ठां काव्यसमीक्षां समाश्रित्यैव रसज्ञसमीक्षकैर्लेखनमतिर्विधेया। संस्कृतवाङ्मयस्थमीदृक्समीक्षान्यूनत्वं पूरयितुं यावन्तो नूतनसमीक्षका बद्धपरिकरा भविष्यन्ति तावन्तोऽपेक्ष्यन्त एव॥



## काव्याध्यापने परिशिष्टम् ।

## पाठादर्शः ।

श्रेणिः—आङ्ग्लपाठशालीया पञ्चमी। कालावधिः—सार्धघटिकापरिमितः।

विषयः—शरद्वर्णनपराः श्लोकाः।

शरद्वर्णनविषयकाणां केषाञ्चिच्छ्लोकानां प्रत्यक्षाध्यापनरीतिरत्रोपस्थाप्यते। प्रकृतिवर्णनविषयकाः श्लोकाश्छात्रेभ्योऽतीव रोचन्ते। अतस्तादृशा एव प्रारम्भिकाध्यापने ग्राह्याः। ऋतुषट्कवर्णनपरेषु श्लोकेषु तस्मिंस्तस्मिन्नेव ऋतौ पाठितेषु तत्तद्दृश्यानां प्रत्यक्षानुभूत्याऽध्यापनमतिमात्रं रसप्रबोधकरं भवति। पाठादर्शगताः प्रश्नाः, प्रश्नोत्थापका विवरणपराश्च वाक्यांशा अध्यापकेन प्रयोक्तव्याः। छात्राणामपेक्षितानि प्रत्युत्तराणि ( ) इत्यर्ध-

चन्द्रचिह्नद्वये स्थापितानि । अध्यापकेन कर्तव्यं विवरणं कदाचिदर्ध-चन्द्रचिह्नद्वयाद्बहिः कदाचिच्च [ ] इति समकोणचिह्नद्वये स्थापितम् । प्रायोऽत्र विसन्धिलेखनमनुसृतम् ।

१ प्रस्तावः । छात्राणां परिचितानुभवमधिष्ठाय प्रश्नाः ।

यदा पर्जन्यः वर्षति तदा कः ऋतुः ? (वर्षाः)। पर्जन्यकाले—वर्षाकाले मेघाः जलं वर्षन्ति। मेघाः वर्णेन कीदृशाः ? ( कृष्णाः)। मेघाः कुत्र दृश्यन्ते ? (आकाशे)। आकाशस्य कानि नामान्तराणि ? (नभः, गगनम्, अम्बरम् इति) ( छात्रैर्ज्ञातपूर्वाणामेव पर्यायाणां निष्काशनमत्र शक्यम्। यदि पर्यायाः श्लोकगताश्छात्रैरज्ञातपूर्वाश्च, तर्हि तेऽस्मिन्नेव सन्दर्भेऽध्यापकेन कथनीयाः, फलके ज्ञातपदैः सम लेखनीयाश्च ) । वर्षाकाले जलं वर्णेन कीदृशम् ? ( आरक्तम् )। कस्मात्कारणात् आरक्तम् ? ( तत्पङ्केन मलिनं, तस्मात् )। वर्षाकाले वायुः कथं वहति ? ( वेगेन )। वायोः कानि नामान्तराणि ? ( पवनः, वातः, अनिलः इत्यादीनि )। वर्षाकाले वनं वर्णेन कीदृशम् ? ( हरितम् ) । वर्षर्तोः अनन्तरं कः ऋतुः आगच्छति ? ( शरदृतुः ) । शरदि आकाशं वर्णेन कथम्भूतम् ? ( नीलम् )। कस्मात्कारणात् नीलम् ? ( तत्र मेघाः न सन्ति, तस्मात् )। [ अतः आकाशं निरभ्रम् । तस्य वर्णः नीलः निर्मलः विधौतः वा,—इति विवरणेन श्लोकगतः 'विधौत'—शब्दः नूतनत्वात् कथनीयः फलके लेखनीयश्च ] शरत्काले जलं वर्णेन कथम्भूतम् ? ( निर्मलम् )। शरत्काले वायुः कथं वहति ? ( मन्दं मन्दम् )। शरत्काले वनभागाः वर्णेन किम्भूताः ? ( पीताः प्रसन्नाश्च )। तर्हि वर्षाकालः शरत्कालः च इति उभौ ऋतू युष्माभिः दृष्टौ । तयोः कः अतीव रम्यः ? ( शरत्कालः ) ।

२ सन्दर्भादिकथनम् । अद्य वयं शरत्कालस्य रम्यं वर्णनं वाच-याम । एतद्वर्णनं श्रीवाल्मीकिना रामायणे कृतम् ।

३ अध्यापकस्य वाचनम्। पूर्ववर्णितरीत्या द्विः कार्यम्। प्रथम-वाचनसमये छात्रैः पुस्तकानि नोद्घाटयितव्यानि। केवलं श्रवणेनैवार्थः पदमाधुर्यं च बोद्धव्ये, अध्यापकस्य पठनरीतिरभिनयश्च सन्द्रष्टव्यौ। प्रथम-वाचनात्पूर्वं "एतेषु श्लोकेषु यानि श्रुतिमधुराणि पदानि तानि चित्तेषु

स्थिराणि कुरुत। वाचनानन्तरं कथयत च" इति छात्रसमवधानजननार्थं निवेदनीयम्। द्वितीयवाचनात्पूर्वं तानि पदानि छात्रेभ्यो निष्कास्य फलके लेखनीयानि। द्वितीयवाचनसमये छात्रैः पुस्तकान्युद्घाटनीयानि। एवमध्यापकस्य द्विर्वाचन समाप्तं स्यात्।

## पाठनीयाः श्लोकाः।

जलं प्रसन्नं कुसुमप्रहासं क्रौञ्चस्वनं शालिवनं विपक्वम्।
मृदुश्च वायुर्विमलश्च चन्द्रः शंसन्ति वर्षव्यपनीतकालम् ॥१॥
विपक्वशालिप्रसवानि भुक्त्वा प्रहर्षिता सारसचारुपङ्क्तिः।
नभः समाक्रामति शीघ्रवेगा वातावधूता ग्रथितेव माला ॥२॥
व्यक्तं नभः शस्त्रविधौतवर्णं कृशप्रवाहानि नदीजलानि।
कह्लारशीताः पवनाः प्रवान्ति तमोविमुक्ताश्च दिशः प्रकाशाः ॥३॥

४ छात्राणां मनोगत वाचनं, स्थूलप्रश्नाश्च। तदनु १ के शंसन्ति? २ सारसपक्षिणां पङ्क्तिः किं करोति? ३ कथम्भूताः पवनाः प्रवहन्ति? इति स्थूलप्रश्नत्रयमुद्दिश्य छात्रैः श्लोकाना मनोगतं वाचनं कार्यम्। अस्मिन् समये कानिचिदपरिचितपदान्यध्यापकेन छात्रसन्देहानुसारं विशदीकर्तव्यानि। अनन्तरमुपरितनैरेव स्थूलप्रश्नैश्छात्रबोधः परीक्षणीयः।

५ सूक्ष्माध्ययनम्। तदनन्तरं प्रश्नविवरणादिद्वारा पूर्वदर्शितरीत्या सूक्ष्माध्ययनं कार्यम्। यथा—

(अ) प्रथमश्लोकविवरणम्। जलं कथम्भूतं दृश्यते? (प्रसन्नम्)। कस्मात् कारणात् तत् प्रसन्नम्? (तत् निर्मलं स्वच्छं वा, तस्मात्) [वर्षाकाले तत् पङ्केन युक्तं पङ्किलं वा आसीत्। अधुना पङ्कः जलस्य तले स्थितः, अतः तत् प्रसन्नम्]। तस्मिन् जले हसन्ति–प्रहसन्ति–प्रकर्षेण हसन्ति, कानि तानि? (कुसुमानि) [पुष्पाणि, प्रसूनानि वा]। यदा यूयं हसथ, तदा युष्माकं मुखानि विकसन्ति। अत्र कुसुमानि प्रहसन्ति, तर्हि तानि कीदृशानि? (तानि विकसितानि)। कुसुमानां प्रहासः जले वर्तते, तर्हि तत् जलं किम्भूतम्? (कुसुमप्रहासम्) [अत्र समासविग्रहः प्रकारान्तरेण कर्तुं शक्यते इति दृष्टं स्यात्]। पुनश्च तस्मिन् जले स्वनः स्वरः श्रूयते, केषाम्? (क्रौञ्चानाम्) [अत्र छात्राणां विस्पष्टबोधार्थं

मातृभाषापर्यायोऽपि निवेदनीयोऽध्यापकेन ]। क्रौञ्चाः * कथं शब्दायन्ते? (उच्चैः)। केन कारणेन उच्चैः? (ते आनन्दिताः)। तर्हि जलं पुनः कीदृशम्? (क्रौञ्चस्वनम्) [ क्रौञ्चस्वनमिति विशेषणपदं 'शालिवनम्' इति विशेष्यपदेनापि अन्वितं स्यात्। अतस्तथा प्रश्ना अपि सम्भविष्यन्ति ] पुनश्च शालीनां वनं–क्षेत्रं जलस्य समीपे एव वर्तते। [ महाराष्ट्रभाषागतः 'साळी' इति शब्दोऽप्यत्र कथनीयः ] कविः शालिवनं वर्णयति, केन शब्देन? ('विपक्वम्' इति) [ शालिवनं विशेषेण पक्वम्, न अधुना कोमलम् ] अतः तद् वर्णेन कीदृशम्? (पीतम्)। [ यथा सुवर्णं शोभनवर्णं तथा शालिक्षेत्रम् अपि। पीतं शालिवनं सुवर्णमिव मनोहरं दृश्यते। ] सुवर्णं धनिकानां धनम्। शालिवनमपि सुवर्णमेव, केषाम्? (कृषीवलानाम्)। [ धान्यमेव कृषीवलाना धनं सुवर्णं वा। ] अस्मिन् क्षेत्रे वायुः अपि वहति–वाति [ पुरस्तनश्लोकगतं पदमत्र बुद्ध्या प्रयोज्यम् ] कीदृशः वायोः स्पर्शः? (मृदुः) [ वायुः मन्दं मन्दं वहति–वाति, तस्मात् सः मृदुः। ] वायुः क्षेत्रे वहति। स शालीनां गन्धमानयति। कीदृशः सः गन्धः? (मधुरः)। शरत्काले रात्रौ चन्द्रः किम्भूतः दृश्यते? (विमलः) चन्द्रात् मलः विगतः, दूरं नीतः, व्यपनीतः। [ पुरस्तनः शब्द इत्थमादावेवोचितसन्दर्भे कथनीयः ] अतः सः विमलः। विमलत्वस्य किं विशिष्टं कारणम् (आकाशं निरभ्रम् इति)। चन्द्रः वर्णेन कीदृशः? (शुभ्रः)। चन्द्रस्य किरणानां स्पर्शः कथम्भूतः? (शीतलः)। चन्द्रः शुभ्रः शीतलश्च। अत एव स नयनयोः आनन्दकरः। तर्हि अत्र शंसन्ति–प्रशंसन्ति–स्तुवन्ति, कानि? (जलम्, शालिवनम्, वायुः, चन्द्रः च) [ एतानि कर्तृवाचकपदानि अत्र एकैकशः निष्कासनीयानि ] एतानि कं शंसन्ति? (वर्षव्यपनीतकालम्) [ एतस्मात् शरत्कालात् वर्षं वृष्टिः वर्षर्तुः वा व्यपनीतः दूरं नीतः। तस्मात् अयं शरत्कालः 'वर्षव्यपनीतकालः' इति कविः वदति। उपरिवर्णिताः सर्वे रम्येण शरत्कालेन आनन्दिताः तं स्तुवन्ति, " असुखकरः वर्षर्तुः गतः, सुखकरः शरत्कालः आगतश्च इति वदन्ति इव ]

(आ) प्रथमश्लोकवाचनम्–स्थूणानिखननन्यायेनार्थदृढीकरणार्थं पुनरपि कार्यम्।

( इ ) द्वितीयश्लोकावतरणिका । अधुना आकाशे शालिक्षेत्रे च मनोहरा शोभा दृश्यते, तां वयं पश्याम: ।

( ई ) द्वितीयश्लोकस्य वाचनं विवरणं च । अत्र समाक्रामति [ अभिनयदर्शनम् ] व्याप्नोति, सर्वत्र प्रसृता भवति, केषां पङ्क्तिः माला वा ? ( सारसानाम् ) [ जलस्य तीरे वसता सारसपक्षिणां हंसानाम् इत्यर्थः ] कविः तां पङ्क्तिं वर्णयति, केन पदेन ? ( 'चारु' इति पदेन )। सारसाना चारुः मनोहरा शोभना पङ्क्तिः वर्तते । [ सा कुतः मनोहरा तद्वयं पश्यामः ] सा पङ्क्तिः समाक्रामति, किम् ? ( नभः ) [ नभः, आकाशम्, गगनम् । ' नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम् ' इत्यमरः । सारसपङ्क्तिः आकाशे इतस्ततः सञ्चरति इत्यर्थः । ] कविः सारसपङ्क्तेः वेगं वर्णयति, केन पदेन ? ( 'शीघ्रवेगा' इति पदेन ) [ सा पङ्क्तिः न मन्दं मन्द गच्छति, किन्तु शीघ्रं झटिति आकाशे उड्डयते, तस्मात् तस्याः वेगः शीघ्रः वर्तते ] पुनश्च सा पङ्क्तिः प्रहर्षिता—प्रकर्षेण हर्षिता—अतीव आनन्दिता, किं कृत्वा ? ( भुक्त्वा ) भुक्त्वा नाम भक्षयित्वा । किं भुक्त्वा सा प्रहर्षिता ? ( विपक्वशालिप्रसवानि ) प्रसवानि नाम मञ्जरीः कणिशानि [ महाराष्ट्रभाषायां ' लोम्बी ' ' कणीस ' इति उच्यते ] तानि प्रसवानि केषाम् ? ( शालीनाम् )। शालयः पुनः किंविशिष्टाः ? ( विपक्वाः )। शालीनां मञ्जर्यः विपक्वाः, पीताः, रुचिकरैः तण्डुलकणैः पूर्णाः, ताः भक्षयति सारसपङ्क्तिः । [ यदा क्षेत्रं धान्यसम्पन्नं भवति, तदा बहवः खगाः तत्र आगच्छन्ति, धान्यकणान् यथेष्टं भक्षयन्ति च इति युष्माभिः दृष्टमेव । अतः सारसपङ्क्तिः तण्डुलकणान् यथेष्टं भक्षयित्वा प्रहृष्टा सती आकाशे झटिति उड्डयते इत्यर्थः ] तदा सा का इव दृश्यते ? ( माला इव )। केषां सा माला स्यात् ? ( पुष्पाणाम् ) किंलक्षणा माला इव ? ( ग्रथिता ) [ ग्रथिता नाम रचिता—केन अपि सूत्रे बद्धा ] पुनः सा माला अवधूता [ अभिनयदर्शनम् ] चालिता कम्पिता, केन ? ( वातेन ) [ वातेन कम्पिता पुष्पाणां माला यथा मनोहरा दृश्यते, तथा इयं सारसपङ्क्तिः अपि इत्यर्थः । ]

( उ ) उपमानोपमेयदर्शनम् । अत्र सारसपङ्क्तिः कया तुलिता ? ( पुष्पाणां मालया )। सारसपङ्क्तिः शीघ्रवेगा, तर्हि माला कथम्भूता ?

(वातावधूता)। माला यथा ग्रथिता तथा सारसपङ्क्तिः अपि ग्रथिता सङ्घटिता एव।

सारसपङ्क्तिः।

| उपमेयम् | उपमानम् |
|---|---|
| सारसपङ्क्तिः | पुष्पमाला |
| शीघ्रवेगा | वातावधूता |

ग्रथिता

[ यथाशक्य सारसपङ्क्तेश्चित्रम् उपरिलिखितरीत्या फलके आलेखनीयम्, उपमानोपमेयभावश्च उपरितनप्रश्नैः सह उपरिस्थितरीत्या फलके विशदीकार्यः। प्रारम्भे 'उपमेयम्' 'उपमानम्' चेत्येतयोः पारिभाषिकशब्दयोरुपयोगं विनैव सादृश्य विशदीकर्तव्यम्। ]

(ऊ) पुनरपि द्वितीयश्लोकवाचनम्।

(ऋ) तृतीयश्लोकावतरणिका। पुनः कविः शरदः सौन्दर्यं प्रकारान्तरेण वर्णयति, तद् वयं पश्यामः।

(ॠ) तृतीयश्लोकस्य वाचनं विवरणं च। कविः नभः आकाशं वर्णयति, काभ्यां पदाभ्याम्? ('व्यक्तम्' 'शस्त्रविधौतवर्णम्' च इति)। अत्र नभसः वर्णः किम्भूतः? (विधौतः) विधौतः अतिनिर्मलः उज्ज्वलः च। किम् इव उज्ज्वलः? (शस्त्रम् इव) [ शाणशिलायां शस्त्रं घृष्यते, तदा शस्त्रं निर्मलम् उज्ज्वलं च दृश्यते, तथा नभसः वर्णः अपि दृश्यते। नभः अपि निर्मलम् उज्ज्वलं च दृश्यते ] नभः निर्मलम् उज्ज्वलं च, अत एव पुनः तत् कीदृशं दृश्यते? (व्यक्तम्) [ व्यक्तं सुस्पष्टम्

इत्यर्थः। यतः नभः विधौतम्, ततः एव तत् व्यक्तं सुस्पष्टं वा। नभसः नैसर्गिकं नीलत्वं सुस्पष्टं दृश्यते इत्यर्थः] नभः नीलम् उज्ज्वलं च दृश्यते, किम् अत्र विशिष्टं कारणम्? (तत्र मेघाः न सन्ति)। वर्षाकाले एतद् नभः अदृश्यत एव, किन्तु तदा कः तस्य वर्णः? (कृष्णः, मलिनः)। कैः सः कृष्णः? (मेघैः)। कृष्णैः मेघैः तदा सर्वत्र अन्धकार इव तम इव आसीत्। अधुना नभः निर्मलम् उज्ज्वलं च। अतः सर्वाः दिशः कथम्भूताः? (तमोविमुक्ताः)। तमसः अन्धकारात् दिशः विमुक्ताः विशेषेण मुक्ताः। अत एव पुनश्च ताः दिशः कीदृश्यः? (प्रकाशाः)। [प्रकाशयुक्ताः, प्रकाशिताः।] अधुना नदीनां जलानि कीदृशानि? (कृशप्रवाहानि)। नदीना प्रवाहाः कृशाः सञ्जाताः, न तु प्रभूतं जल तेषु। वर्षाकाले नदीनां प्रवाहाः किंविशिष्टाः आसन्? (विशालाः) [पर्जन्यवृष्ट्या नदीनां प्रवाहाः उभे कूले–तटे उत्तीर्य सर्वत्र प्रसृताः। महान् जलपूर एव आसीत् नदीषु। सर्वत्र जलं जलमेव। किन्तु सम्प्रति नदीप्रवाहाः कृशाः प्रसन्नाश्च। अधुना पवनाः वाताः प्रवान्ति–प्रवहन्ति। ते स्पर्शेन कीदृशाः (शीताः) [ते अधुना शीताः, किन्तु सुखकरा अपि, न तु पर्जन्यवाता इव पीडाकराः] पवनाः कैः शीताः? (कह्लारैः)। [कह्लाराणि नाम श्वेतकमलानि तैः पवनाः शीताः] तर्हि कह्लाराणि कुत्र विकसितानि स्युः? (जले)। जलं जलस्थानि कह्लाराणि च स्पृष्ट्वा पवना आगच्छन्ति, अतः पवनाः गन्धेन कीदृशाः? (मधुराः)। कीदृशः तर्हि अयं शरत्कालः? (अतीव सुखकरः)।

(ल) अध्यापकेन कार्ये सर्वेषा श्लोकानां पुनर्वाचनम्।

६ पदसौष्ठवनिरीक्षणम्। 'नभः समाक्रामति शीघ्रवेगा' इत्यत्र लघुगुरुवर्णानां क्रमः सारसपङ्क्तेर्झटित्युत्पतनं, नभसो विशालोदरत्वं, तत्र च सारसाना वेगं कथं द्योतयति, 'वातावधूता ग्रथितेव माला' इति पदान्यपि गगन एव सारसानामूर्ध्वमधस्तिर्यग्गमनं कथं सूचयन्ति, तथा "कह्लारशीता ᳵ पवना ᳵ प्रवान्ति" इत्यस्यां पङ्क्तौ ह्कारोपध्मानीय-योजनया पवनस्य ध्वनिर्वहनं च कथं सूच्यते, तद्विशिष्टपठनशैल्या प्रदर्शनीयमिति दिक्।

चित्रचारुत्वनिरीक्षणम्। युष्माभिः अधीत वर्णनम् अधिकृत्य चित्रकरेण एकं चित्रम् आलेखनीयं स्यात्, तर्हि तत्र कानि कानि वस्तूनि

आलेख्यानि, के के च वर्णाः कुत्र उपयोज्याः, इत्युक्तिपुरस्सरं प्रश्नाः प्रष्टव्याः। तैश्च—

"नीलं जलम्। जले श्वेतानि कुसुमानि (कह्लाराणि?)। तीरे श्वेताः क्रौञ्चाः। तीरे विपक्वं (पीतं) शालिवनम्। शालिप्रसवानि भक्षयन्तः केचित्सारसाः (श्वेताः?) नीलमुज्ज्वलं च नभः। नभस्युत्पतन्ती केषाञ्चित्सारसाना पङ्क्तिः (श्वेता)।"

इत्यादिरीत्या छात्रेभ्यः पदानि निष्कास्य तानि फलके विलिख्य च मनोज्ञं चित्रं छात्रचित्तचक्षुषां पुरतः स्थापनीयम्। 'चन्द्रः, कृशप्रवाहा नदी' चेत्येतयोरन्तर्भाव उपरितने चित्रे न स्यात्। तदर्थं भिन्नं चित्रमपेक्ष्येत।

साङ्घिकं वाचनम्। छात्रैरध्यापकमनु सर्वे श्लोकाः पठनीया गेया वा। एतत्पठनं छात्राणामतीव रुचिकरं चिरस्मृतिजनकं च भवति।

एवं पाठादर्शे काव्याध्यापनरीतिर्दिङ्मात्रं प्रदर्शिता। अत्रैतत्तु न विस्मर्तव्यं यदध्यापनस्य चित्तरञ्जकत्वे हृदयहारित्वे वाऽध्यापकेन विहितपूर्वो रसज्ञवृत्तिसनाथः संस्कृतकाव्याभ्यासस्तदीयमुत्साहतादात्म्यादिसम्पन्नत्वं प्रत्युत्पन्नमतित्वं चैव प्रधानकारणम्। नाध्यापनपद्धतिविज्ञानमात्रं यशस्करं भवति॥



## शब्दशक्तिग्रहः।



अपरिचितभाषाध्यापने पाश्चात्यभाषातत्त्वविदः शब्दार्थज्ञापनं प्रायः (१) वस्तुचित्राभिनयदर्शनपूर्वकं तत्तद्भाषागतशब्दोच्चारेण (व्यवहारेण), (२) मातृभाषानुवादेन, (३) लक्षणपर्यायादिकथनेन, (४) वाक्यगतसन्दर्भेण चेति चतुर्धा विदधति। अत्रोत्तरोत्तरस्मात्पूर्वपूर्वः प्रकारः श्रेयान्, किन्तु बालाध्यापने प्रथम एव श्रेष्ठः। द्वितीयः प्रकारोऽन्येभ्योऽपि प्रथमस्य

निकटतरत्वं वहतीत्यतो मातृभाषोपयोगोऽपि कुत्रचिन्निःशङ्कं कार्योऽध्यापकेन। तथापि यथाशक्यसम्भवं संस्कृताध्यापने सुगमगीर्वाणभाषाव्यवहारो युक्तः शब्दार्थज्ञापने।

पौरस्त्यभाषातत्त्वविदश्च—

शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥

इति रीत्या शब्दार्थज्ञापनप्रणालीमष्टविधां मन्यन्ते। तद्यथा—

(१) व्याकरणम्। अत्र पदपदार्थसम्बन्धज्ञानापरपर्याये शक्तिग्रहे व्याकरणमेव 'मुखं व्याकरणं स्मृतम्' इति शिक्षावचनानुसारेण मुखत्वेनाङ्गीकृतम्। धातुप्रकृतिप्रत्ययादिभिः पदरूपसिद्धिर्वाक्यगतपदानां च क्रियान्वयेन कारकज्ञापनं प्रयोगज्ञापनं चेति प्रमुखं प्रयोजनं व्याकरणस्य। किन्तु प्रकृतिप्रत्ययबलेन पदरूपसिद्धिं बालाध्ययनारम्भे क्लेशजनकां विहाय, पदविच्छेदनभूयिष्ठं यौगिकार्थज्ञापनं विहाय च, पदावयवशक्तिबोधापेक्षया पदसमुदायशक्तिबोधनं प्रारम्भे सुगमतरं मन्यमानाः पूर्वतनसम्प्रदायिनः शास्त्रिवरेण्याः शब्दरूपावलिद्वारा संहतं रूढार्थं बोधयतां सिद्धपदरूपाणामेव शिष्यैः पाठनं श्रेयोवहमित्यवधारयन्। अयं पन्था बालधीशक्त्यनुगुणः पाश्चात्यभाषातत्त्वसंवादी चेति विशेषतोऽत्र समवधेयम्। अपि च सुबन्तरूपप्रधानायाः समासबहुलायाश्च गीर्वाणभाषायाः प्रकृतिमनुसृत्य तिङन्तरूपपाठनादपि सुबन्तरूपपाठनमेव वरं, समासकारकप्रयोगज्ञानं प्राधान्येन सुबन्तरूपज्ञानावलम्बि चेति सम्यङ् निर्णीय, शब्दरूपावलीसमासचक्रान्तर्गतं व्याकरणमेव वाङ्मयाध्ययनसंनिधानेन स्थिरीकृतं व्युत्पत्तिसिद्धयेऽलं, पञ्चमहाकाव्याध्ययनानन्तरमेव सिद्धान्तकौमुद्यादिमुखेन व्याकरणशास्त्राध्ययनं श्रेय इति निरचिन्वन् दाक्षिणात्याः शास्त्रिवराः। 'लक्ष्यलक्षणे व्याकरणम्' इति वार्तिकानुसारेण 'शब्दो लक्ष्यः, सूत्रं लक्षणं' च। अतो लक्षणात्पूर्वं लक्ष्यमधिकृत्यैव दाक्षिणात्यानामध्यापनप्रणाली प्रचलिता।

किञ्च संहिताब्राह्मणादिकालात्प्रभृति पञ्चमहाकाव्यकालपर्यन्तमुत्तरोत्तरं गीर्वाणभाषा स्वकीयमाख्यातप्राधान्यं परित्यज्य सुबन्तप्रधान

समासबहुला च सञ्जातेति स्वर्गीयश्रीभाण्डारकरमहोदयानामेव सिद्धान्तः[1]। एतत्परिवर्तनानुसारेणाध्यापनेऽपि व्याकरणस्य, तद्गतप्रकरणानां पूर्वोत्तरभावः सुबन्ततिङन्तक्रमेण शनैः शनैः परिवृत्त इत्यनुमीयते। भगवान् पतञ्जलिरात्मनः पूर्वं व्याकरणाध्ययनं कथं प्रचलितमित्यत्र विषये ब्रवीति। यथा—

"पुराकल्प एतदासीत्। संस्कारोत्तरकालं ब्राह्मणा व्याकरणं स्माधीयते। तेभ्यस्तत्तत्स्थानकरणनादानुप्रदानेभ्यो वैदिकाः शब्दा उपदिश्यन्ते। तदद्यत्वे न तथा। वेदमधीत्य त्वरिता वक्तारो भवन्ति 'वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिकाः। अनर्थकं व्याकरणम्' इति। तेभ्य एवं विप्रतिपन्नबुद्धिभ्योऽध्येतृभ्यः सुहृद् भूत्वाऽऽचार्यः (पाणिनिः) इदं शास्त्रमन्वाचष्टे" इति।

आ पतञ्जलेर्भूरिकालं यावत्पाणिन्यष्टाध्यायीक्रमेणैवादौ सूत्रपठनं तदनु काशिकाध्ययनं तदुत्तरं च पातञ्जलमहाभाष्याध्ययनमित्ययं क्रमः स्थूलतः प्रवृत्तः, यतः पाणिनेः पूर्वस्मात्कालादारभ्य पतञ्जलिपर्यन्तं तदूर्ध्वमपि गीर्वाणभाषाया भाष्यमाणत्वाद् बालैर्ज्ञातपूर्वत्वाच्च बाल्य एव 'रक्षोहागमलघ्वसन्देहार्थं' व्याकरणपठनं भाषामुखेनैव प्राचलदिति निश्चीयते। काशिकायाः समकालिकाद् व्याकरणनियमोदाहरणपराद्भट्टिकाव्यात्तदनुवर्तिभ्यश्च काव्येभ्यः—यथा भौमककृतं रावणार्जुनीयं, हलायुधविरचितं कविरहस्यं, हेमचन्द्रनिर्मितं द्व्याश्रयकाव्यम्—इत्यादिभ्योऽवधार्यते यल्लक्ष्यलक्षणयोः (वाङ्मयव्याकरणयोः) अध्ययनमेकसमयावच्छेदेनैव प्रस्तुतमासीन्न तु व्याकरणपूर्वकमिति। व्याकरणाध्यापनेऽपि पाणिनिसूत्रक्रम उत्तरोत्तरं भाषापरिवर्तनानुरोधेन बालबोधसौकर्यानुरोधेन चादौ सुबन्तप्रकरण पश्चात्तिङन्तप्रकरणमित्यानुपूर्व्या परिणतिं गत इत्यत्र विषये कातन्त्रसारस्वतमुग्धबोधादिसुगमव्याकरणानि, तत्पश्चाद्द्राविषु पाणिनीयमतानुसारिग्रन्थेषु च विमलसरस्वतिकृता रूपमाला, रामचन्द्रनिर्मिता प्रक्रियाकौमुदी, भट्टोजिदीक्षितविरचिता सिद्धान्तकौमुदी चेति ग्रन्थाः सन्ति विशिष्टानि निदर्शनानि। वाररुचसङ्ग्रहादिका अन्येऽपि बहवो बालोपयोगिनो ग्रन्था सुबन्तकारकसमा-

---

1 Read 'Wilson Philological Lectures'. Chapter I. p. 24.
(Edition-1914)

-सतद्धिततिङ्कृदादिक्रममेव पुरस्कृत्य बहुभिर्जनैर्विरचिताः। इयं प्रवृत्तिरेतदेव साधयति यत्तिङन्तरूपपाठनात्प्रागेव सुबन्तरूपपाठनं भाषास्वरूपानुसारेण प्रभूतोपयुक्तम्। शास्त्रिभिरनुसृतं बालानां शब्दरूपावलिसमासचक्रपाठनमस्या एव प्रवृत्तेः प्रमाणम्।

वाङ्मयावबोधे वाक्यार्थः कारकप्रयोगज्ञानमवलम्बते, कारकप्रयोगज्ञानं तिङन्तरूपावलम्बि चेति सत्यम्। किन्तु तदर्थं सविस्तरा क्रियापदरूपसाधनिका सामान्यच्छात्राणां नापेक्षिता, स्थूलं क्रियापदज्ञानं पर्याप्तमिति निपुणं विचार्य केचिच्छास्त्रिवरा अध्ययनारम्भे शब्दरूपावलीपाठनादनन्तरं छात्रान् धातुरूपावलीद्वारा सिद्धतिङन्तरूपाण्येव पाठयन्ति, न तु रूपसाधनिकायामभिनिविशन्ते। विशेषतोऽत्र ज्ञातव्यं यत्र सर्वेऽपि शास्त्रिणः पूर्वं वैयाकरणा अभवन्। ते रूपावलीसमासचक्रगतेन व्याकरणमात्रेण वाङ्मयमधीत्य न्यायादिशास्त्रमात्राध्ययनरतास्तस्मिंस्तस्मिन्नेव शास्त्रे प्रगाढपाण्डित्यमलभन्त। इयं पूर्वतनी स्थितिः सविशेष चित्तगोचरीकार्या भाषापरिचयं विना, वाङ्मयाध्ययनं विनापि बहुकालं यावत्क्रियापदरूपसाधनिकायामेव च्छात्रबुद्धिं क्लेशयद्भिराङ्ग्लपाठशालाध्यापकैः।

(२) उपमानम्। गोसदृशो गवयपदवाच्य इति सादृश्यज्ञानमिव परिचितवस्तुपदादिसादृश्येनापरिचितवस्तुपदादिपरिचय उपमानम्। निखिलैर्दार्शनिकैरुररीकृतमप्येतदुपमानप्रमाणमाह्लादकारिणा साधर्म्येण काव्यश्रीवर्धनकरं विषयावबोधप्ररोचनपरमित्यालङ्कारिकाणां सविशेषं शिरोधार्यम्। अतः साहित्यानुरागिणां शास्त्रिवराणा प्रचुरोपमानप्रमाणपुरःसरमध्यापनमपि शिष्याणा मनोविनोदजनकं भवति।

(३) कोशः। कोशादपि शक्तिग्रहो भवतीत्यतः शास्त्रिवराश्छात्रैरमरादिकोशगतानुपयुक्तपर्यायबहुलान् विशिष्टभागान् पाठयन्ति, ये भागाश्छात्रव्युत्पत्तिबलं संवर्ध्य काव्याध्ययनकाले प्रभूतोपयोगिनः। किन्त्वसति वाङ्मयसन्दर्भेऽवबोधपूर्वे विहितमेतदध्ययनं क्लेशोत्पादनात्प्रारम्भे विफलं, सञ्जाते वाङ्मयाध्ययने सफलमित्यनुभवमाश्रित्य किञ्चिद्वाङ्मयाध्ययनानन्तरमेवारम्भणीयमिति भाति।

(४) आप्तवाक्यम्। आप्तवाक्यादपि शक्तिग्रहो यथा 'कोकिलः पिकशब्दवाच्य' इति रीत्या शब्दप्रमाणपुरस्सरं परिचितपदैः सममपरिचित-

पदबोधो विधीयते। आप्तो यथार्थवक्ता यथाभूतस्याबाधितार्थस्योपदेष्टा वेति कल्पनायां पुरस्कृतायामध्यापकोऽप्यत्राऽऽप्तो भवितुमर्हति।

(५) व्यवहारः। लोकव्यवहारसामान्येनापि शक्तिग्रहो भवतीति पूर्वतनप्राच्यदार्शनिकैरेव समुद्भावितं भाषाभ्यासतत्त्वम्। अत्र विषये न्यायसिद्धान्तमुक्तावल्यामुक्तं यत्—

"यथा प्रयोजकवृद्धेन (गुरुणा वा) घटमानयेत्युक्तम्। तच्छ्रुत्वा प्रयोज्यवृद्धेन (अन्येन गुरुणा शिष्येण वा) घट आनीतः। तदवधार्य पार्श्वस्थो बालो घटानयनरूपं कार्यं 'घटमानय' इति शब्दप्रयोज्यमित्यवधारयति। ततश्च 'घटं नय, गामानय' इत्यादावावापोद्वापाभ्यां (अन्वयव्यतिरेकाभ्यां) घटादिपदानां कार्यान्वितघटादौ शक्तिं गृह्णाति" इति।

न्यायसिद्धान्तमञ्जर्यामप्ययमेव विषयो विस्तरेणोक्तः। यथा—

"प्रथमतः शक्तिग्रहो व्यवहाराद् घटानयनादिरूपाद्भवति। तथा हि 'घटमानय' इति केनचित्प्रयोजकवृद्धेन नियुक्तः कश्चन प्रयोज्यवृद्धस्तद्वाक्यतोऽर्थं प्रतीत्य घटमानयति। तच्चोपलभमानो बालस्तया क्रियया तस्य प्रयोज्यस्य प्रयत्नमनुमिनोति। तेन च घटानयनगोचरप्रयत्नेन तस्य ज्ञानं घटानयनगोचरमनुमिनोति। स्वप्रयत्ने तेन तथा निश्चयात्। ततस्तद्धेत्वाकाङ्क्षायामुपस्थितत्वाच्छब्दमेव कल्पयति। तदनन्तरं घटादिपदानां प्रत्येकमावापोद्वापाभ्यां घटपदं घटधीजनकमिति कल्पयति। क्लृप्ते च तस्मिन्नतिप्रसङ्गभङ्गाय तज्जननानुकूलसङ्केतरूपं सम्बन्धं कल्पयति। अत्रातिप्रसङ्गस्तु घटपदं घटधीजनकमिव पटधीजनकमपि स्यादिति अगृहीतशक्तिकानामपि घटबोधः स्यादिति वा बोध्यः। तत आद्यशक्तिग्रहानन्तरमुपमानादिभिः शक्तिग्रहो भवति" इति।

अत्र घटानयनकार्योपालम्भः, आनयनप्रयत्नानुमानम्, स्वप्रयत्नस्मरणपुरस्सरं निश्चयः, शब्दार्थयोः प्रकल्पनम्, अन्वयव्यतिरेकज्ञानेन प्रतिपदार्थाध्यवसायः, अनुकूलसङ्केतकल्पनं चेति पार्श्वस्थबालस्य सकलोऽपि मानसिको व्यापार आधुनिकमनोविज्ञानवर्णितस्य मानसिकव्यापारस्य सुतरां सादृश्यं वहतीति चेतश्चमत्कारजनकम्। पाश्चात्यानां संवादपद्धति-

रप्यमुमेव मानसिकव्यापारमधिष्ठाय बालानां भाषाध्यापने प्ररोचनावर्धन-पुरस्सरं प्रचलतीति सुविज्ञातं भवेन्मर्मज्ञैः। अत इयं पद्धतिः प्राच्यदार्श-निकानुयायिन्येवेति निश्चित्य संस्कृताध्यापकैरियं भाषाध्यापने संस्कृत-वाग्व्यवहाररूपेणाङ्गीकार्या।

काव्यप्रकाशेऽप्यमुमेव विषयं प्रकारान्तरेण प्रतिपाद्य मीमांसैक-देशिनामन्विताभिधानवादिनामेवैतन्मतमित्युक्तम्। यथा—

"—'देवदत्त, गामानय' इत्युत्तमवृद्धवाक्यप्रयोगाद्देशाद्देशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धे नयति सति 'अनेनास्माद्वाक्यादेवंविधोऽर्थः प्रतिपन्नः' इति तच्चेष्टयानुमाय, तयोरखण्डवाक्यवाक्यार्थयोरर्थापत्त्या वाच्यवाचकभावलक्षणं सम्बन्धमवधार्य बालस्तत्र व्युत्पद्यते। परतः 'चैत्र, गामानय। देवदत्त, अश्वमानय। देवदत्त, गां नय' इत्यादिवाक्यप्रयोगे तस्य तस्य शब्दस्य तं तमर्थमवधारयतीति अन्वयव्यतिरेकाभ्यां प्रवृत्ति-निवृत्तिकारि वाक्यमेव प्रयोगयोग्यमिति वाक्यस्थितानामेव पदानाम-न्वितैः पदार्थैरन्वितानामेव सङ्केतो गृह्यत इति विशिष्टा एव पदार्था वाक्यार्थः। न तु पदार्थानां वैशिष्ट्यम्। यद्यपि वाक्यान्तर-प्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन तान्येवैतानि पदानि निश्चीयन्ते इति पदार्थान्तरमात्रेणान्वितः पदार्थः सङ्केतगोचरस्तथापि सामान्यावच्छादितो विशेषरूप एवासौ प्रतिपद्यते, व्यतिषक्तानां पदार्थानां तथाभूतत्वादि-त्यन्विताभिधानवादिनः" इति।

अयमेव मानसतत्त्वावलम्बी प्राच्यानां सिद्धान्तः पाश्चात्यानां संवाद-पद्धतौ प्रथमत्वमधिगम्य वस्तुचित्राभिनयदर्शनपूर्वके तत्तद्वाचकनूतनपद-पाठने भाषायाः प्रत्यक्षव्यवहारे च पर्यवस्यति। पाश्चात्यभाषातत्त्वविदोऽ-प्यन्विताभिधानवादिन इव वाक्यवादिनः, न त्वभिहितान्वयवादिन इव पदवादिनः।

मानसिकस्याव्यक्तार्थस्यैव व्यक्तशब्दरूपेण प्रस्फुरणाद्विवर्ताद्वा शब्दार्थयोः सिद्धः (नित्यः) सम्बन्धो वर्तत इत्यभिप्रेत्य शब्दस्य बहिर्निर्गमनव्यापारविषये, तथा च व्यवहारतो जाते शक्तिग्रहे, सङ्घट-

मानमानसव्यापारविषये च दुर्गाचार्यो 'व्याप्तिमत्त्वात्तु शब्दस्य' (निरुक्तं १।२।४) इति निरुक्तपङ्क्तिं व्याचिख्यासुर्व्रूते । यथा—

"कथं पुनर्व्याप्तिमान् शब्द इति ? शृणु—शरीरे ह्यभिधानाभिधेयरूपा बुद्धिर्हृदयान्तर्गताकाशप्रतिष्ठिता । तयोरभिधानरूपाभिधेयरूपयोर्बुद्ध्योर्मध्येऽभिधानरूपया शास्त्राभिमतप्रयोजनविजिज्ञापयिषया बुद्ध्या पुरुषेण तदभिव्यक्तिसमर्थेन स्वगुणभूतेन प्रयत्नेनोदीर्यमाणः शब्द उरःकण्ठादिवर्णस्थानेषु निष्पद्यमानस्तथा पुरुषार्थाभिधानसमर्थवर्णादिभावमापद्यमानः पुरुषप्रयत्नेन बहिर्विनिक्षिप्तोऽविनाशिनि व्यक्तिभावमापन्नः श्रोत्रद्वारेणानुप्रविश्य प्रत्याय्यस्य बुद्धिं सर्वार्थरूपां सर्वाभिधानरूपां च प्रोतांत्येव व्याप्तिमाञ्छब्दः । ......स शब्दः स्वमर्थमभिदधत् स्वक्रियाप्रवेशोपजनितेनाभिधानेनाख्यातमित्येवमादिना स्वमात्मानमभिसम्बध्य तिरोभवितुमुपक्रमते विनाशं चोपैति । ...... पुरुषप्रयत्नोपजनिताद् वक्त्रोद्घातात्परस्यार्थप्रत्ययमाधाय शब्दव्यक्तय एव ध्वंसन्ते, न तु शब्दाकृतयः । तास्तु तयाभिधानशक्त्या बुद्धिद्वारेणावस्थिताः स्वानर्थान् प्रकाशयन्त्यः स्थिता एव भवन्ति ।" इति ॥

मनस उद्बुद्धत्वानुद्बुद्धत्वे प्रतिपादयत आधुनिकमनोविज्ञानान्न किञ्चिदप्युशरितनं प्रतिपादनं भिद्यत इत्यालोच्य चित्रीयेत कस्यापि चेतः ।

अपि च संवादपद्धतिगतं शब्दसहकृतं यद्वस्तुचित्राभिनयादिदर्शनं तस्योपयोगः परिमितत्वं चेति विषये महर्षियास्कवचनं यथा—'अणीयस्त्वाच्च शब्देन संज्ञाकरणं व्यवहारार्थं लोके' (१।२।५)। अत्र दुर्गाचार्यो व्याख्याति यथा—"अभिनया अपि व्याप्तिमन्तः पाणिविहाराक्षिनिकोचादयः ।...... न त्वणीयांसः, ते महता यत्नेन व्याप्नुवन्ति, न च निःसन्दिग्धं कुर्वन्ति । तत्प्रतीतार्थसम्बन्धस्यैव, नेतरस्य । शब्दस्त्वपरिमितमर्थमल्पीयसा यत्नेनोच्चारितो व्याप्नोति । तस्मादणीयस्त्वादिति विशेषहेतूपपत्त्या शब्देनैव संज्ञाकरणं लोके इत्युपपन्नम्" इति ।

व्यवहारेऽभिनयादीनामर्थवाचकत्वमत्राभ्युपगम्यते । किन्तु शब्दसहकृता एवाभिनयादयो निःसन्दिग्धबोधे समर्थाः, शब्दस्य व्याप्तिमत्त्वादणीयस्त्वाच्चेति यास्कदुर्गवचनाशयः । तस्माच्छब्दशक्तिग्रहे वस्तुचित्राभिनयदर्शनस्य

परिमितत्वेऽप्युपयुक्तत्वं वर्तत इति भावः। अयं भावोऽधस्तनेन वचनेनापि सावष्टम्भो भवति। यथा—

" अङ्गुलीप्रसारणादिपूर्वकं निर्देशेन शक्तिग्रहो भवति। यथा—बाल, तवेयं माता, तवायं पिता, अयं ते भ्राता कन्दलीफलमभ्यवहरतीति निर्देशेन बालस्य मात्रादौ शक्तिग्रहः।" ( न्यायकोशः )

शक्तिग्रहे शब्दार्थज्ञापनविषये वाऽध्याप्यमानभाषाया अभिनयसमन्वितो व्यवहार एव श्रेयान्, स एवाऽऽद्यः, 'शक्तिग्राहकशिरोमणिः' इति प्राच्यशास्त्रविदामपि प्रथितः सिद्धान्तः। प्राच्यप्रतीच्यभाषातत्त्वविदामत्र विषयेऽभेद एव नयनविषयमायातीत्यतः साभिप्रायमेवावतरणषट्कमुपर्युपन्यस्तम्। अतो संस्कृताध्यापने संवादपद्धत्यनुसरणं पाश्चात्यानुकरणमात्रमिति दुर्ग्रहः सर्वथा परिवर्जनीयः।

नन्वयं व्यवहारः शिशोर्मातृभाषाभाषणशक्तिसम्पादन एव गृहजनानुकरणेन प्रचलति, न तु संस्कृताङ्ग्लादिनूतनभाषावगतौ। अपरिचितभाषाधिगमे मातृभाषानुवादपद्धतिरेव श्रेयसीति चेत्, न। मानसतत्त्वानुसारेण मनुजचित्तेषु भाषाधिगमस्य या स्वाभाविकी प्रवृत्तिर्निलीना, या च शैशवे निसर्गत एवातिमात्रमुद्बुद्धत्वेन मातृभाषावगमे बहूपयुक्ता, या पुनः प्रौढे वयस्युपयोगाभावान्नष्टेव भाति, किन्तु कृतोपयोगा सती प्रौढत्वेऽपि नूतनभाषाधिगमसमये पुनरप्युद्बुध्य प्रभूतोपकारिणी भवति, सैव बालानां नूतनभाषावगतावपि प्रयुक्ता सती प्ररोचका चिरसंस्कारोत्पादिनी च भवतीति सन्देहातीतमेव। कोशव्याकरणानुवादादीनि प्रौढच्छात्रोपयुक्तानि भाषाज्ञानसाधनानि सन्ति प्रयत्नतन्त्राणि, न तु स्वाभाविकप्रवृत्तितन्त्राणि। लोकव्यवहारस्य स्वाभाविकप्रवृत्तितन्त्रत्वादाद्यत्वं शक्तिग्राहकशिरोमणित्वं वा सुव्यक्तमेव। तथापि यथाप्रसङ्ग समाश्रितेषु व्यवहारसहकृतकोशव्याकरणानुवादादिषु च्छात्राणां महद्धितं स्यादित्यत्र नास्ति सन्देहलवोऽपि। अत्र शब्दार्थयोर्नित्यसम्बन्धं व्यवहारव्याकरणयोरन्योन्याश्रयित्वं च प्रतिपादयतो भगवतः पतञ्जलेरेवमाशयः—

" कथं पुनर्ज्ञायते सिद्धः शब्दोऽर्थः सम्बन्धश्चेति? लोकतः। यल्लोकेऽर्थमर्थमुपादाय शब्दान् प्रयुञ्जते, नैषां निर्वृत्तौ यत्नं कुर्वन्ति...

न तद्वच्छब्दान्प्रयुयुक्षमाणो वैयाकरणकुलं गत्वाऽऽह–कुरु शब्दान् प्रयोक्ष्य इति। तावत्येवार्थमुपादाय शब्दान्प्रयुञ्जते। यदि तर्हि लोक एषु प्रमाणं, किं शास्त्रेण क्रियते? लोकतोऽर्थप्रयुक्ते शब्दप्रयोगे शास्त्रेण धर्मनियमः क्रियते।" (पातञ्जलमहाभाष्ये पस्पशाह्निकम्)

पतञ्जलेः समये संस्कृतभाषाव्यवहारपूर्वकमेव व्याकरणशास्त्राध्ययनं प्रचलितमासीदिति सुव्यक्तं प्रतीयते। अत एवाधुनापि संस्कृताध्यापकैर्भाषाव्यवहारपूर्वकं व्याकरणमध्यापनीयमित्यत्र भावः। आदौ भाषाऽनन्तरं व्याकरणमिति न्यायेन लोकव्यवहारसामान्यादर्थप्रयुक्ते शब्दप्रयोग एव धर्मनियमं कुर्वतो व्याकरणशास्त्रस्याध्यापनं श्रेय इत्ययं भाषाधिगमस्य नैसर्गिकः क्रमः प्राच्यप्रतीच्यभाषातत्त्वविदां परमसंमतः। अत इदानीमपि संस्कृताध्यापनेऽयं क्रमः परिपालनीय इत्याकूतम्। नूतनभाषाध्ययने पुनर्भाषाव्यवहारं परित्यज्य सर्वत्रापि मातृभाषानुवादपद्धतिरेवोपयोक्तव्येति स्याच्चेत्कस्यापि मिथ्याग्रहस्तर्हि स कथयतु,–संस्कृतमूलग्रन्थव्याख्यानपराः सर्वेऽपि टीकाग्रन्थाः संस्कृतभाषायामेव किमर्थं विरचिता इति।

(६) वाक्यशेषः। प्रकृतार्थस्य सन्देहे वाक्यशेषात्प्रमाणभूतवाक्यान्तराद्वा विशिष्टशब्दार्थोऽवधार्यते। यथा–'अक्ताः शर्कराः (मृत्तिकामिश्राः क्षुद्रपाषाणाः) उपदधाति' इत्यत्र 'शर्कराः केनाङ्क्तव्याः' इति प्राप्ते सन्देहे 'तेजो वै घृतम्' इति वाक्यशेषात् 'शर्करा घृतेनाङ्क्तव्याः, न तु तैलादिना' इत्यर्थो निर्धार्यते। 'येन पदेनानुक्तेन वाक्यं समाप्येत स वाक्यशेषः' वा (सुश्रुतसंहिता, उत्तरतन्त्रम्, अ. ६५)। अयं वाक्यशेषो मीमांसकानां विशिष्टार्थनिर्धारणरीतिं प्रकटयति।

(७) विवृतिः। "विवरणादपि शक्तिग्रहः। विवरणं तु तत्समानार्थकपदान्तरेण तदर्थकथनम्। यथा घटोऽस्तीत्यस्य कलशोऽस्तीत्यनेन विवरणाद् घटपदस्य कलशे शक्तिग्रहः। एवं पचतीत्यस्य पाकं करोतीत्यनेन विवरणादाख्यातस्य यत्नार्थकत्वं कल्प्यते।" (न्यायसिद्धान्तमुक्तावलिः)

एषा विवृतिष्टीकाविवरणव्याख्याव्याख्यानाद्यपरपर्याया यथा मुखतस्तथा ग्रन्थतोऽपि विधातुं शक्यते। "मूलग्रन्थस्याप्रतिपत्तिविप्रतिपत्त्यन्यथाप्रतिपत्तिनिवारणेन तत्कर्तुरभिप्रेतस्य शब्दान्तरेण विवरणं टीका"

(न्यायकोशः)। 'यथासम्भवमर्थस्य टीकनं' वा टीका (काव्यमीमांसा)। अयं सामान्यवाची टीकाशब्दः 'टीकते गमयति बोधयति प्रकाशयति वाऽर्थम्' इति धात्वर्थात्सिध्यति। याऽर्थं विवृणोति व्यनक्ति प्रकाशयति स्फोटयति वा विवृतिर्विवरणं वा। मुखतो ग्रन्थतो वा तत्समानार्थकपदान्तरेण विशेषेण विस्तरेण यदाख्यानं कथनं तद् व्याख्यानम्। 'अतिशयवर्णना व्याख्यानं' वा (कौ. अर्थशास्त्रम्, १५।१५०)। उक्तं च 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणम्' इति। तथा च "न केवलं चर्चापदानि व्याख्यानम्–वृद्धिः–आत्–ऐच्–इति। किं तर्हि? उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवति। अविजानत एतदेवं भवति" इति (व्या. महाभाष्यम्, प्रथमाह्निकम्)। व्याख्यानस्य पराशरपुराणे लक्षणं यथा—

पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना।
आक्षेपोऽथ समाधानं व्याख्यानं पञ्चलक्षणम्॥ इति।

विवरणव्याख्यानादीनामन्येऽपि तदर्थवाचिनः 'प्रवचनादयः' पर्यायाष्टीकाग्रन्थनामकरणायोपयुज्यन्ते, किन्तु सर्वमप्येतद्विधं वाङ्मयं सामान्यवाचिना टीकापदेनैव व्यपदिश्यते।

टीकाया वृत्तिपद्धतिभाष्यसमीक्षाचूर्णिपञ्जिकाकारिकावार्तिकसङ्ग्रहादयोऽन्येऽपि भेदाः। तेषां लक्षणानि यथा—

"सूत्राणां सकलसारविवरणं वृत्तिः। सूत्रवृत्तिविवेचनं पद्धतिः। आक्षिप्य भाषणाद्भाष्यम्। अन्तर्भाष्यं समीक्षा। अवान्तरार्थविच्छेदश्च सा (समीक्षा चूर्णिर्वा)। विषमपदभञ्जिका पञ्जिका। अर्थप्रदर्शनकारिका कारिका। उक्तानुक्तदुरुक्तचिन्ता वार्तिकमिति शास्त्रभेदाः।" (काव्यमीमांसा)

यद्वा सूत्राणां समग्रतात्पर्यस्य यद् व्याख्यानं सा वृत्तिः। सूत्रस्य वृत्तेश्च तात्पर्यं विविच्य यस्यामितिकर्तव्यताप्रकारः कथ्यते सा पद्धतिः। पूर्वपक्षखण्डनपूर्वकमुत्तरपक्षेण सिद्धान्तकथनं भाष्यम्।

सूत्रार्थो वर्ण्यते येन पदैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥

इत्यपि भाष्यलक्षणम्। मध्येभाष्यं यो विमर्शस्तस्य सङ्कलनेन सम्यगीक्षणं समीक्षा। सा समीक्षा प्रधानान्तर्वर्तिनोऽवान्तरार्थस्य पृथक्करणम्। 'अवान्तरार्थविच्छेदश्च सा चूर्णिः' इति गृहीते पाठे, या चूर्णयति खण्डयति पूर्वपक्षिणामवान्तरार्थरूपं दुस्तर्कं सा चूर्णिर्महाभाष्यं वेत्यर्थः समुदेति। विषमाणां दुरूहाणां पदानां भञ्जिका अर्थाविष्कारिका पञ्जिका। छन्दोरूपेण या सूत्रार्थं प्रदर्शयति सा कारिका। सूत्रकृता येऽर्था उक्ताः, अनवधानतोऽनुक्ता दुरुक्ताश्च तेषां चिन्ता विमर्शो यत्र तद् वार्तिकम्।

उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते।
तं ग्रन्थं वार्तिकं प्राहुर्वार्तिकज्ञा मनीषिणः॥

इत्यपि पराशरपुराणे वार्तिकलक्षणम्। सङ्ग्रहलक्षणं यथा—

विस्तरेणोपदिष्टानामर्थानां सूत्रभाष्ययोः।
निबन्धो यः समासेन सङ्ग्रहं तं विदुर्बुधाः॥ इति।

सर्वेऽप्येते टीकाभेदाः शास्त्रभेदा इति संसूच्य टीकाशब्दो राजशेखरेण शास्त्रापरपर्यायवाची गृह्यते। शिष्यतेऽनेनेति, शास्ति च त्रायते चेति वा शास्त्रमिति व्युत्पादनेन शास्त्रमत्र ज्ञानस्य नियमनं व्यवस्थापनं शिष्यबुद्ध्यनुसारेण च यथाक्रमं सम्यगवबोधनं मुखतो ग्रन्थतोऽध्यापनं वेत्यर्थमवगमयति। शास्त्रशब्दोऽत्र न केवलं विशिष्टसम्प्रदायवाची किन्तु षड्दर्शनवाची वैदिकावैदिकसर्वदर्शनसङ्ग्राहकश्च ग्राह्यः, सर्वेष्वपि यथाशक्ति ज्ञानव्यवस्थितिसामान्यत्वात्। विविधैष्टीकाभेदैरेव संस्कृतवाङ्मयं तद्गतेन शास्त्रजातेन सह सुविस्तृतिमापन्नमित्यतः संस्कृतवाङ्मयस्यासङ्ख्यटीकासङ्कुलत्वं शास्त्रभूयिष्ठत्वं वेति व्यवच्छेदो भवति। भाषाया उत्तरोत्तरं परिवृत्तिस्तदनुरोधेनोत्तरकालीनैर्जनैः पूर्वकालीनग्रन्थानामनवगम एव टीकावाङ्मयविवृद्धेर्मूलम्। अपि च गुरुमुखपरम्परयाऽऽगतं ज्ञानं कदाचित्कालदेशदोषतः क्षीणत्वं प्राप्नोति, खण्डितं वा भवतीत्यतो निगूढाशयविशदीकरणार्थमविरतसन्तानार्थं चापि तज्ज्ञानं टीकाग्रन्थेष्वक्षरसंनिविष्टं क्रियत इत्यन्यदपि टीकाग्रन्थानां बीजम्। मूलग्रन्थापेक्षया तद्विवरणं जटिलतरमिति स्थितौ टीकायाष्टीका अपि टिप्पनीरूपेण प्रचुरतया लिखिताः सन्ति संस्कृतवाङ्मये। किन्तु कुत्रचिदेतद्दोषदुष्टमपि टीकावाङ्मयं प्रायो

मूलार्थस्य समीचीनबोधं कुर्वदास्त इत्युक्तौ न स्यात्प्रत्यवायः। ज्ञानव्यवस्थिति पदवाच्ये शास्त्रे पदवाक्यप्रमाणपराणि यानि भाषातत्त्वान्युपयुज्यन्ते, यानि च तेषु तेषु टीकाग्रन्थेष्वपि सामान्यतोऽनुसृतानि तानि निखिलवैदिकावैदिकदार्शनिकानां प्रायः सम्मतानि। एतेषां टीकादिगतानां समानभाषातत्त्वानां सङ्ग्रथनं व्यवस्थापनं वा पाश्चात्यैः 'Methodology' (पद्धतिविज्ञानम्, व्यवस्थितिशास्त्रम्) इत्यभिधीयते। एतत्पद्धतिविज्ञानं व्यवस्थितिशास्त्रं वा प्राचीनभारते प्रभिन्नशास्त्रद्वारा परिणतेः परां कोटिं गतम्। तथापि प्रभिन्नप्रस्थानेष्वपि समानभाषातत्त्वावलम्बविषयेऽविसंवाद एव वर्तते। प्रस्थानभेदमनुसरतामपि टीकाग्रन्थानामर्थविवृतिपरिपाटीषु भेदतोऽपि साधर्म्यमेव नयनसरणिमायाति। अत्र—

प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।
रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां।

नृणां शब्दतत्त्वावलम्बी सूत्रभाष्यटीकामार्ग एक एव गम्य इति सुव्यक्तम्।

शब्दतत्त्वमाश्रित्य विशिष्टशास्त्रटीकालेखने यानि पदवाक्यप्रमाणपराणि सामान्यतत्त्वानि सन्दृब्धानि, यानि पुरतः संस्थाप्य च प्रभिन्नटीकाग्रन्थविरचनं पूर्वस्मिन् काले जातं, तानि सर्वाण्यपि विविधमौखिकाध्यापनरीतीनां निदर्शनानीत्यनुमातुं शक्यते। यतो भारतीयानां मौखिकाध्यापने यावती श्रद्धा न तावती लिखितपठने। विशेषतो वेदाध्ययने—

गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः॥

इति वेदाङ्गशिक्षाप्रमाणाल्लिखितपाठकस्याधमत्वं, मौखिकाध्यापने गुरुमुखे वा भारतीयानां प्रभूतादरश्च प्राचीनकालात्प्रभृत्यद्य यावद् दृश्येते। किन्तु गुरुमुखं क्षरं, लिखितवाङ्मयं चाक्षरमिति सन्दृश्य भारतीयैर्मौखिकाध्यापेन विषयावबोधनरीत्या च यानि यानि तत्त्वान्यनुसृतानि तानि तान्येव काव्यशास्त्रटीकाग्रन्थरूपेण चिरस्थायित्वं प्रापितानीति टीकाग्रन्थगतप्रमाणैरेव निश्चेतुं शक्यम्।

पुरा प्रतिगृहं पिता पुत्रं गुरुः शिष्यं वा मुखतोऽध्यापयति स्म। एवमध्यापनस्य मौखिकत्वसामान्येऽपि प्रतिगुरु प्रभिन्नाऽध्यापनरीतिः

श्चेति ।......विध्यर्थवादोभयविलक्षणं तु वेदान्तवाक्यम् ।" ( मधुसूदन-सरस्वतीकृतः 'प्रस्थानभेदः' )

सर्वाण्येव ब्राह्मणानि मन्त्रविवरणव्याख्यानपराण्येवेत्यभिप्रायेण श्रीमच्छङ्कराचार्या बृहदारण्यकोपनिषद्भाष्ये "इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निश्वसितानि" (बृ. २।४।१०) इति वचनमुद्दिश्य प्राहुः। यथा—

"इतिहास इत्युर्वशीपुरूरवसो संवादादिः 'उर्वशी हाप्सराः (शत० ब्रा० ११–४–४–१) इत्यादि ब्राह्मणमेव। पुराणम् 'असद्वा इदमग्र आसीत्' (तै. २।७) इत्यादि। विद्या देवजनविद्या (नृत्यगीतादि-शास्त्रम्) 'वेदः सोऽयम्' (शत. १३–४–३।१०–१४) इत्याद्या। उपनिषदः 'प्रियमित्येतदुपासीत' (बृ. ४–१–३) इत्याद्याः। श्लोका ब्राह्मणप्रभवा मन्त्राः 'तदेते श्लोकाः' (बृ. ४–३–११; ४–४–८) इत्यादयः। सूत्राणि वस्तुसङ्ग्रहवाक्यानि वेदे यथा 'आत्मेत्येवोपासीत' (बृ. १–४–७) इत्यादीनि। अनुव्याख्यानानि मन्त्रविवरणानि। व्याख्यानान्यर्थवादाः। अथवा वस्तुसङ्ग्रहवाक्यविवरणान्यनुव्याख्यानानि।...मन्त्रविवरणानि व्याख्यानानि। एवमष्टविधं ब्राह्मणम्॥"

विद्वत्परिषत्सु यज्ञतत्त्वमधिकृत्य सञ्जाताः संवादविवादा ब्राह्मणानां कर्मकाण्डे सङ्ग्रथिताः, येभ्यः पूर्वमीमांसाशास्त्रं परिवृद्धिं गतम्। तथा च परब्रह्मतत्त्वं पुरस्कृत्य परिषत्सु सम्भूताः संवादविवादा ब्राह्मणानामुपनिषत्संज्ञिते ब्रह्मकाण्डे (ज्ञानकाण्डे) सङ्कलिताः, यतश्चोत्तरमीमांसाशास्त्रं सुविस्तृतिमापन्नम्। उभयत्रापि पुराणेतिहासाद्यर्थवादरूपेण परिचितवस्तूदाहरणरूपेण चोपमानप्रमाणं प्राचुर्येणोपयुज्य, प्रत्यक्षप्रयोगावलम्बेन वस्तु प्रदर्श्य च गभीरविषयविवरणमुत्थाप्याकाङ्क्षापूर्वकं गुरुभिः प्रश्नप्रतिवचनभङ्ग्या विहितं संलक्ष्यते। उत्थिताकाङ्क्षापुरस्सरं प्रौढशिष्यैः पृष्टानां परिप्रश्नानां प्रतिवचनानि गुरुभिरुचितसमय एव व्याख्यानानुव्याख्यानतः प्रदेयानीत्यासीत्तदानीं मौखिकाध्यापनरीतिः। अत्रैव समुद्भूता प्रश्नोत्तरपद्धतिः संवादपद्धतिर्वा तदुत्तरभाविषु ग्रन्थेषु प्राधान्येन खण्डान्वयमुखेना समाश्रित दृश्यते। अतो या निर्वचनव्याख्यानपद्धतिः पूर्वं मुखत एव गुरुशिष्य-

परम्परया प्रचलिता, विद्वत्परिषन्निर्णयैश्च ध्रुवत्वं प्राप्ता सैव वेदोत्तरभाविषु ब्राह्मणग्रन्थेषु लेखनसंनिविष्टाऽभवदित्यवधारयितुं पार्यते।

यज्ञतत्त्वं मूर्धन्यीकृत्य वेदाङ्गषट्कस्योपन्निर्देशो ब्राह्मणानां कर्मकाण्डे कृतो विद्यते। सामवेदान्तर्गतब्राह्मणेषु प्राधान्येन पदं लेभिरे षडङ्गानि, यान्युत्तरवर्तिनि काले विविक्तत्वेन परिवृद्धिं जग्मुः। यथा मुण्डकोपनिषदि (१।१।५) तथा छान्दोग्येऽपि (७।१।२) वेदानां वेदः (व्याकरणम्), देवविद्या (निरुक्तम्), ब्रह्मविद्या (शिक्षाकल्पच्छन्दांसि), नक्षत्रविद्या (ज्यौतिषम्) इति शब्दान्तरेण वेदाङ्गानां निर्देशाज्ज्ञायते यदुपनिषत्काले तान्यपरिणतरूपेण मौखिकपरम्परया वाऽविद्यन्त एव। अन्यथा शिक्षानिरुक्तव्याकरणानामत्यन्ताभावे वेदानां स्वरस्थानप्रयत्नाद्यनपेतं साधूच्चारणम्, अर्थज्ञानं, संहितायाः पदपाठे पदपाठस्य संहितायां वा विपरिणमनं चेत्यादीनामसम्भवाद् वेदरक्षामार्गे महानेव व्याघातः समुदपत्स्यत।

ब्राह्मणान्युपनिषदश्चेत्युभयोरन्तरवर्तिनि काले शाकल्येन संहितायाः पदपाठः प्रतिष्ठापित इत्यनुमीयते। 'पदप्रकृतिः संहिता' (ऋक्प्रातिशाख्यम्, २।१) 'परः सन्निकर्षः संहिता' (पा. १।४।१०९) इति सूत्रानुसारेण संहितापाठे यथास्थितानामेव पदानां सन्धियुक्तमुच्चारणं, छन्दोनियमानतिक्रम्य विशिष्टस्वरवर्णोच्चारणं चानिवार्ये स्तः। पदपाठे तु मन्त्रपदानि विच्छेदनपुरस्सरं नियमैरेवोच्चार्यन्ते। अयं पदपाठः सन्धिसमासादिविग्रहपरो लौकिकसंस्कृतस्थस्य पदच्छेदरीतेः पूर्वतनं स्वरूपम्। एतदर्थं नामाख्यातोपसर्गनिपातानां चतुर्णां पदजातानां, सन्धिसमासानां च यज्ज्ञानमपेक्षितमासीत्तस्य गुरुमुखपरम्परयैव विद्यमानत्वात्पदपाठनिर्माणं सुशकमभवत्। एतदेव व्याकरणसनाथं साधूच्चारणशास्त्रं केनचित्कालेन शिक्षाग्रन्थेषु प्रातिशाख्येषु च संनिविष्टमभवत्। 'पदप्रकृतीनि सर्वचरणानां (शाखान्तराणां) पार्षदानि (प्रातिशाख्यानि)' इति महर्षियास्केन प्रातिशाख्यानां (वेदव्याकरणानां) स्वस्मात्पूर्वभावो निर्दिष्टः। तदानीं वेदवाङ्मयवृक्षस्य प्रभिन्नशाखानां विपुलविस्तारात्प्रतिवेदशाखं वैदिकव्याकरणरूपाणि प्रातिशाख्यानि प्रभिन्नानि जातानि। पदपाठविरचने वेदानां सम्यगर्थनिर्धारणमेव प्रयोजनम्। तदर्थं च समुत्पन्नानि शिक्षाव्याकरणनिरुक्तादी-

न्यर्थनिर्धारणसाधनानि वेदाङ्गत्वेन वेदव्याख्यानपराण्येवेत्यवगन्तव्यम्। वेदाङ्गानामुत्पत्तिविषये महर्षिर्यास्को ब्रूते यत्— "साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः। उपदेशाय ग्लायन्तो (खिद्यमानाः) अवरे बिल्मग्रहणाय (सुखग्रहणाय विस्तरेण) इमं ग्रन्थं (निघण्टुं) समाम्नासिषुर्वेदं (वेदशाखाभेदान्) च वेदाङ्गानि च" (निरुक्तम् १।२०।२)। एवं शिक्षाव्याकरणादिवेदाङ्गानां सद्भावाद्गीर्वाणवाण्याः साधूच्चारणविषये दत्तसूक्ष्मावधानैः पूर्वतनाध्यापकैर्यथा तस्याः पावित्र्यमद्य यावत्परिपालितं, तथेदानीन्तनाध्यापकैरपि तत्परिपालनीयं साधूच्चारणाभ्यासेनेति संस्मरणीयः सिद्धान्तोऽत्र समुदेति।

प्रातिशाख्येषु प्रायः स्थानप्रयत्नविवेकः, संज्ञाः, सन्धयः, कुत्रचित्पदनिर्वचनं चेति विषया वेदभाषामधिकृत्य निरूपिताः, न तु कारकसमासतद्धितादिविषयाः, येऽविकलतया पाणिनीयसूत्रेषु स्थानमलभन्त। यन्निर्वचनं ब्राह्मणेषु प्रातिशाख्येषु च विरलत्वेनोपलभ्यते तस्य प्रपञ्चो यास्काचार्येण निघण्टुव्याख्यानपरे स्वीयनिरुक्तग्रन्थे कृतः। तेन 'आख्यातजानि नामानि' इति शाकटायनसिद्धान्तमुररीकृत्य 'तदिदं विद्यास्थानं (निरुक्तं) व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकं च' (नि. १।१५।१) निर्मितम्। निर्वचनविषये शब्दचतुष्टयं स्वीकृत्य यास्कमहर्षिणा गुर्वर्थाः सिद्धान्ताः समुद्भाविताः। ते यथा—

"तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेन (धातुरूपेण) अन्वितौ स्यातां तथा तानि निर्ब्रूयात्। अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः (अर्थप्रधानः) परीक्षेत केनचिद् वृत्तिसामान्येन (क्रियागुणसामान्येन)......नैकपदानि (प्रकरणोपपदरहितानि) निर्ब्रूयात् (निरु. अ. २, खं. १-३) इति।

अयं सिद्धान्तनिचयस्तदनन्तरभाविनः पाणिनेर्व्याकरणस्य प्रतिष्ठा, प्राचीनतमे काले समुद्भावितोऽप्याधुनिकभाषाशास्त्रविदां प्रमाणम्। आत्मनः पूर्ववर्तिनां नैरुक्तवैयाकरणयाज्ञिकैतिहासिकनैदानादीनां निर्देशो यास्काचार्येण निरुक्ते कृतः। तस्माद्वेदार्थविस्मरणेन ग्रन्थवैरल्येन च कृशीभूतोऽप्ययं वेदनिरुक्तिप्रवाहो गुरुमुखपरम्परयैव यास्कं यावदागत इति प्रतीयते।

अयमेव प्रवाहो यास्काचार्येण स्थिरीकृतो निरुक्ते प्रश्नप्रतिवचनरूपेणैव व्याख्यानेनेति सन्द्रष्टव्यम्। इयं प्रश्नप्रतिवचनरूपा व्याख्यानपद्धतिर्निरुक्त-व्याख्यातारं दुर्गाचार्यं यावदविरतं सम्प्रातेत्यपि तद्व्याख्यातः प्रतीयते।वेदार्थ-निर्णायकोऽयं निघण्टुनिरुक्तपन्था अमरादिकोशैरुत्तरवर्तिनि काले किञ्चित्परि-वर्तनपुरस्सरं विशिष्टपदसंहत्या क्षुण्णत्वं प्रापितः। प्रारम्भिकाध्यापनेऽनुपयुक्तेऽप्यस्मिन्निरुक्तिमार्गे, यास्कदुर्गादिभिरनुसृता प्रश्नप्रतिवचनरूपा व्याख्यानप-द्धतिर्वाङ्मयाध्यापने सुरुचिरेत्यत्र विज्ञातव्यम्। अपि च यास्काचार्यस्य बह्वर्थगम्भीरा सूत्रमयी भाषाऽनन्तरभाविनः सूत्रवाङ्मयस्य पूर्वरूपं व्यञ्जयति।

एतदनन्तरम्—

सरितामिव प्रवाहास्तुच्छाः प्रथमं यथोत्तरं विपुलाः।
ये शास्त्रसमारम्भा भवन्ति लोकस्य ते वन्द्याः॥ (काव्यमीमांसा)

इति न्यायेन वेदवाङ्मयस्य विभिन्नशाखाभिरपरिमेयव्यासः, वेदाङ्गज्ञानस्य मुखपरम्परया ग्रन्थपरम्परया चोपचयः, ग्रन्थप्रतिलिपीनां वैरल्यान्मौखिका-ध्ययने स्मृतिशक्तौ च महान् भार इत्येतेन कारणकदम्बकेन समासवचनरूपाः सूत्रग्रन्थाः समुद्भूता ज्ञानसन्ततये स्मृतिस्थापनसौकर्याय च। ज्ञानव्यवस्थितेः (शास्त्रदृष्टेः) ज्ञानसङ्क्रातिरीतेः (मौखिकाध्यापनपरिपाट्याः) च विशिष्टं प्राग्भावं विना, तत्तद्विषयपारदर्शित्वं विनायं व्याससमासयोः प्रथमोद्यमोऽसुकर एवाभविष्यत्। उक्तं च राजशेखरेण यथा—'समासव्यासविन्यासः सैष शिष्यहिताय नः' इति।

सूत्रग्रन्थानां शैली लघुविविक्तवाक्यभूयिष्ठानां ब्राह्मणनिरुक्तादि-ग्रन्थानां समुत्कृष्टस्वरूपमेव व्यञ्जयति। अक्षरलाघवार्थं गम्भीराभिप्रायस्य समासतो वचनेनैव सूत्रग्रन्थेषु प्रथमतः समासभूयस्त्वमुपलभ्यते, यदुत्तर-कालीने लौकिकसंस्कृतवाङ्मये ओजोगुणविशिष्टाया गौडीरीतेः प्राधान्येन व्यपदेशकरं सञ्जातम्। समासभूयस्त्वेन सममाख्यातलोपः सुबन्तप्राधान्यं चेत्यपि सूत्रग्रन्थशैल्या वैशिष्ट्यं, यदप्यनन्तरभाविनि संस्कृतवाङ्मये परां कोटिं गतम्। यत्प्रतनुसूत्रमिव सूत्रयति बध्नाति वाऽल्पाक्षरैः पदैरर्थं तदेव सूत्रम्। अक्षरलाघवे समासवचने चाप्यर्थगाम्भीर्यमर्थाप्रतीतिराहित्यमित्या-दयो गुणाः सूत्रेऽपेक्ष्यन्त एव। अतः सूत्रलक्षणमभियुक्तैरुक्तं यथा—

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।
अस्तोभमनवद्यं च सूत्रं सूत्रकृतो विदुः॥

स्मृतिसौलभ्यसम्पादनद्वारा विषयतात्पर्यसुग्रह एव सूत्रग्रन्थानां प्रयोजनम्। अत एव सूत्रशैली न केवलं वेदाङ्गेषु, यथोत्तरं वैदिकदर्शनेषु च, किन्त्ववैदिकदर्शनेष्वपि सामान्यत्वेन पदमधिगतवतीत्युपलभ्यमानैस्तत्तद्ग्रन्थैरेव निश्चीयते। प्रतिवेदशाखं प्रतिवेदाङ्गं प्रतिदर्शनं वा ये सूत्रग्रन्था इदानीमुपलभ्यन्ते, तेभ्योऽपि समधिकाः पूर्वं प्रणीता आसन्निति प्रतीयते, यतोऽनुपलब्धानां सूत्रग्रन्थानां प्रणेतारस्तत्तन्मतोपन्यासपूर्वकमुपलब्धसूत्रग्रन्थेषु नामतो निर्दिष्टाः सन्ति। समानविषयं पुरस्कृत्यापि बहवः सूत्रग्रन्थाः पूर्वतनैर्विद्वद्भिर्विरचिता भवेयुर्येषां संमतं विमतं च समालोच्य तदुत्तरतनैर्दोषवर्जमन्ये व्यापकसूत्रग्रन्थाः प्रणीताः, येन पूर्वतनसूत्रग्रन्था निष्प्रयोजनत्वाद्विस्मृतिपथं प्रयाता इति पाणिनिजैमिनिव्यासादिकृतसूत्रेभ्योऽनुमीयते। असमाने सत्यपि विषये दर्शने वा, प्रतिपक्षभूतदार्शनिक–विमतोपन्यासपूर्वकं स्वीयसिद्धान्तास्तत्तद्दार्शनिकैर्निजसूत्रेपूपस्थापिता इति समालोक्यते। एतेषु सिद्धान्तेषु केचिद्विद्वत्परिषत्सु प्रत्यक्षं सञ्जातानां संवादविवादानां मौखिकनिर्णया एव सूत्ररूपेण सङ्कलिता इत्युक्तिः प्रायो निर्बाधा स्यात्।

प्रतिशास्त्रं सूत्राणि यथाकालं यथावश्यं च समुद्भूतानि, किन्तु समुत्पद्यमानानां तेषां यः क्रमः पूर्वमासीत्स एवाद्य यावदचलरूपेणायात इति नैव कल्पयितुं पार्यते। सर्वेषां सूत्राणां प्रतिशास्त्रं सञ्जातेऽन्तिमे सङ्कलने विषयस्य तात्पर्यानुरोधेनाभिमतपूर्वोत्तरभावानुसारेण च स आदिमोऽनुक्रमः परिवर्तनं प्राप्य स्थिरीभूत इति प्रतीयते। यथाऽधुनातनलेखकस्य विमर्शविषयीभूतः कश्चित्प्रबन्ध आदौ विशिष्टक्रमेण प्रस्फुरत्यनन्तरं चाभिमतस्वरूपेण भिन्नक्रममधिगत्यान्तिमं ध्रुवाकारं प्राप्नोति तथैवेयं स्थितिः स्यात्। कालानुक्रमेण प्रतिशास्त्रं सूत्रसमुच्चयानां ज्ञेयविषयसङ्गत्यनुरोधेनाऽ[1]ध्यायपादा-

---

१ शास्त्रेऽध्याये तथा पादे न्यायसङ्गतयस्त्रिधा।
शास्त्रादिविषये ज्ञाते तत्तत्सङ्गतिरूह्यताम्॥

धिकरणादीन् विभागान् प्रकल्प्य पुनश्च प्रत्यधिकरणं[1] विषयसंशयपूर्वपक्ष-सिद्धान्तसङ्गतिरूपाणि पञ्चाङ्गानि संविभक्तानि तत्तच्छास्त्रविद्भिः, येन तत्तच्छास्त्रसमाविष्टं ज्ञानं तत्तद्विशिष्टपद्धतिसनाथं व्यवस्थितिं प्राप्तम्। मीमांसा-वेदान्तशास्त्रयोरेतज्ज्ञानव्यवस्थितिप्रधानं पद्धतिशास्त्रं परमां वृद्धिं लेभे। व्याकरणसूत्रव्यवस्थितिः प्रायोऽध्यायपादादिक्रमेणैव सञ्जाता, किन्तु तत्सूत्र-सङ्गतौ यद्वैशिष्ट्यमधिकरणस्थलेऽधिकारसूत्राणि विरच्य श्रीपाणिनिना प्रकल्पितं, तत्पृथक्तया विवेचनार्हं भवति।

यद्यपि सूत्रेषु तात्पर्यसुग्रहत्वं विद्यते, तथापि साङ्गोपाङ्गविवरण-द्वारा सम्यग्विषयावगमसमनन्तरमेव तात्पर्यावधारणं सुकरं, न तु सूत्र-पठनमात्रेण। तस्माद्बहुकालं यावत् तत्तद्विषयाध्यापकैर्मुखत एवं सविस्तरं विषयव्याख्यानं कार्यं, शिष्यैश्च तदविकलतयाऽऽकलय्य सूत्राणि कण्ठस्थी-कार्याणि, पुनश्च तैः शिष्यैः स्वशिष्या यथापूर्वमेव मौखिकव्याख्यानेना-ध्यापनीया इतीयं परम्पराऽविच्छेदेन चिरकालं प्रस्तुता स्यात्। यद्यप्यसन्दि-ग्धत्वमेव सूत्रस्य विशिष्टलक्षणं, तथाप्यल्पाक्षरत्वेनैव तत्प्रायः सन्दिग्धत्वं भजत इति सार्वजनीनोऽनुभवः। मुखतः सूत्रव्याख्यानेऽनुक्तानां पदानाम-ध्याहारः, उक्तपदानां च विग्रहयोजनापूर्वकं सकलसारभूतं सरलसुबोध-विवेचनमिति स्यात्पूर्वं मौखिकाध्यापनरीतिर्या केनचित्कालेन वृत्तिनामके टीकाप्रभेदेऽक्षरसंनिवेशं लेभे। अनुक्तपदप्रपूरणेन सूत्रार्थस्य च्छन्दोबद्धायां कारिकाया ग्रथनं स्मृतिसौकर्यार्थमेव सञ्जज्ञे। सूत्रमधिकृत्योक्तानुक्तदुरुक्त-चिन्तापरा गद्यरूपवृत्तेर्भिन्ना गद्यनिबद्धाश्छन्दोनिबद्धा वा वार्तिकग्रन्था-प्राय आदित एव ग्रन्थरूपेणावतीर्णाः स्युः, यतः सूत्रपाठे ग्रन्थरूपेण स्थिरी-भूत एव वार्तिकानामुत्पत्तिः सुशकेति भाति पाणिनीयसूत्राण्युद्दिश्य विर-चितेभ्यः कात्यायनवार्तिकेभ्यः। वृत्तिवार्तिकयोः सम्भवो भाष्यग्रन्थेभ्यः पूर्व-जात इति पातञ्जलमहाभाष्यनिर्दिष्टवार्तिकेभ्यः शाबरशाङ्करभाष्योल्लिखित-वृत्तिग्रन्थेभ्यश्च सम्भाव्यते। अपि च सूत्राणां सरलसुबोधव्याख्यानरूपाया मूलार्थमात्रग्राहिकाया गद्यवृत्तेरनन्तरं तेषामनुक्तदुरुक्तचिन्तापराणां वार्ति-कानां प्रवृत्तिस्तदुत्तरमेव पराक्षेपनिरासपुरःसरं भाष्यरूपेण मुखतो लेखतो वा

---

१ विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं विदुः॥

व्याख्यानमित्यनेन नैसर्गिकक्रमेणैव व्याख्यानपद्धतिः परमां विस्तृतिं प्राप्ता। टीकाप्रभेदानामेतत्पौर्वापर्ये तु नियतमेवेति न मन्तव्यं, यतोऽनुकरणमात्रबुद्ध्याऽर्वाक्तनेऽपि काले सूत्रादिनिर्माणं नासम्भवम्। विशेषतोऽत्र समवधेयं यदुपनिषन्निरुक्तादिषु या प्रश्नप्रतिवचनपद्धतिः पूर्वमध्यापने समाश्रिताऽऽसीत्सैव सविशेषं पातञ्जलमहाभाष्ये शाबरभाष्ये चानुसृता दृश्यते। प्रत्यक्षतः पृष्टाः कल्पिता वा शिष्याणां सन्देहाः, प्रतिपक्षिणां पूर्वपक्षभूताः पुरत उपस्थापिताः सम्भाव्या वाऽऽक्षेपाश्च प्रश्नप्रणाल्या प्रागुक्तभाष्यद्वये सङ्ग्रथितास्तेषां प्रतिवचनानि च स्वसिद्धान्तरूपेण। या सूत्रव्याख्यानरीतिर्मौखिकाध्यापने गुरुभिः पूर्वं समाश्रिता तस्या एव लिखितरूपं निदर्शनमुत्तरभाविषु बृहदाकारेषु भाष्यग्रन्थेषु लभ्यते। एवं पाणिनिपतञ्जलिप्रभृतिभिर्वैयाकरणैः प्रदर्शिता पदव्याख्यानरीतिः, जैमिनिशबरस्वामिप्रभृतिभिर्मीमांसकैराविष्कृता वाक्यार्थनिर्णयरीतिः, गौतमादिनैयायिकैः प्रकटीकृता प्रमाणपरीक्षारीतिश्चेतीयं व्याख्यात्रिपथगा सुविमर्शजलसमृध्दया ज्ञानक्षेत्रं सत्यफलसम्पन्नमातन्वाना वैदिकावैदिकसकलदार्शनिकमान्या शिष्यजनोपकर्त्री च सञ्जज्ञे।

सूत्रनिर्माणकालात्पूर्वं यथा वेदार्थसाधनभूतानां षडङ्गानां तथा षड्दर्शनानामपि मौखिकी परम्पराऽविच्छिन्नाऽऽसीत्। अन्यथा षड्दर्शनसूत्राणां विरचनमसम्भवमभविष्यत्। यज्ञतत्त्वपुरस्कारेण ब्राह्मणादिग्रन्थैरुपबृंहितं धर्मशास्त्रोपकारि च यन्मीमांसाशास्त्रं तत्सूत्रकाले जैमिनिकृतन्यायसाहस्र्यां वेदार्थनिर्णयविषये सम्पूर्णतां परमं प्रामाण्यं चोपजग्मौ। 'न्याय'-शब्दोऽत्र न केवलं गौतमीयन्यायशास्त्रवाची, किन्तु लोकव्यवहारागमयुक्तिसिद्धन्यायवाच्यपि। एते जैमिनिसूत्रस्थिता मीमांसान्यायाः शब्दतत्त्वमग्रतो निधायार्थनिर्धारणे साधनभूताः सन्तो यथा धर्मशास्त्रनिर्णये तथा व्याकरणसूत्रनियोजनरीतौ परिभाषारूपेणापि परमोपकारकाः सञ्जज्ञिरे। एवं मीमांसाशास्त्रं न केवलं धर्मशास्त्रस्य, अपि तु व्याकरणाद्यन्यशास्त्राणामप्युपकारकं सम्भूतमित्यनुमीयते। गौतमकृतन्यायसूत्रात्पूर्वं तर्कशास्त्रम् 'आन्वीक्षिकी' इत्यभिधानेन लोकेषु मुखपरम्परया सुप्रचारं, चरकसंहितायां चाक्षरसंनिविष्टं जातम्। न्यायशास्त्रापरपर्यायैषाऽऽन्वीक्षिकी विद्या कौटिलीयार्थशास्त्रे—"हेतुभिरन्वीक्षमाणाऽऽन्वीक्षिकी लोकस्योपकरोति, व्यसनेऽभ्युदये च बुद्धिमवस्थापयति, प्रज्ञावाक्यक्रियावैशारद्यं च करोति—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता॥"

इति यथार्थस्तुतिवाक्यैः समुत्कृष्टां ख्यातिं प्राप। एवं सूत्रनिर्माणकालात्पूर्वं तदनन्तरमपि षडङ्गेषु 'मुखं व्याकरणं स्मृतम्' इति शिक्षावचनानुसारेण व्याकरणं, षड्दर्शनेषु धर्मशास्त्रोपकारि पूर्वमीमांसाशास्त्रमुत्तरमीमांसाशास्त्रं च, तथा प्रमाणोपबृंहितं सर्वशास्त्रोपकारकं न्यायशास्त्रं चेति शास्त्रचतुष्टयं सविशेषं पाठ्यक्रमसमाविष्टं बभूव। परस्परोपकारित्वात्तानि सर्वाण्यपि शास्त्राणि कस्यचिदपि जनस्याध्ययने समकक्षत्वं समसंविभागं च भेजिरे। किन्त्वध्ययनानुक्रमे व्याकरणमेव मुखत्वेनादौ संमानं लेभे। यतः "प्रधानं च षट्स्वङ्गेषु व्याकरणम्। प्रधाने च कृतो यत्नः फलवान् भवति" (पात. म. भा. १।१)। तथा च 'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्' इत्युक्तिः काणादोपलक्षितन्यायशास्त्रसिद्धान्तानां पाणिनीयव्याकरणसिद्धान्तानां न केवलं व्यापकत्वं प्रकटयन्ति, किन्तु प्रायो निखिलवैदिकावैदिकदार्शनिकमान्यत्वमपि। यतः सत्स्वपि विभिन्नसम्प्रदायिषु व्याकरणेषु, वेदाङ्गत्वेन शिरोधार्यतां गतं पाणिनीयव्याकरणं बौद्धाद्यवैदिकदार्शनिकेष्वपि पाठ्यत्वेन प्रभूतादरभाजनमभवदिति 'इत्सिङ्ग–ह्युएन्त्सङ्ग'–प्रभृतिचीनयात्रिकाणां वृत्तान्तेभ्योऽवगम्यते। एवं तदानीं सत्यामपि तौलनिकज्ञानाधिगमप्रवृत्तौ, अनन्तरवर्तिनि काले 'द्वादशवर्षैर्व्याकरणं श्रूयते' (पञ्चतन्त्रम्) इत्यादीनि वचनानि परिवृत्तिं गतामध्ययनाध्यापनरीतिं ख्यापयन्ति। अतो नैतच्चित्रं यद्वेदाध्ययनापेक्षया वेदाङ्गैकाध्ययन एव प्रदीर्घं कालं यापयतां शिष्याणां मतिस्तौलनिकज्ञानापेक्षया शास्त्रैकदेशनैपुण्ये दर्शनैकदेशवैदग्ध्यसम्पादने वाऽधिकतरं व्यासक्तेति। तथापि पदवाक्यप्रमाणपराणां यथोत्तरं व्याकरणमीमांसान्यायशास्त्राणामन्योन्यपूरकत्वसिद्धये, शास्त्रदृष्टेः पूर्णत्वापादनाय च, अधिगतेऽपि व्याकरणादिविशिष्टशास्त्रस्य साङ्गोपाङ्गे ज्ञाने, मीमांसान्यायाद्यन्यशास्त्राणां स्थूलं ज्ञानं प्रत्येकं पण्डितेनाधिगन्तव्यमिति प्रणाल्यद्य यावद्भारते प्रचलिता दरीदृश्यते। यथा–सञ्जातेऽपि महाभाष्यान्तव्याकरणप्रावीण्ये,प्रत्येकं शास्त्रिप्रवरेण 'सिद्धान्तमुक्तावलि' यावन्न्यायशास्त्रस्य, 'मीमांसान्यायप्रकाशं' यावत्पूर्वमीमांसायाः, 'वेदान्तपरिभाषां' यावदुत्तरमीमांसायाश्च तौलनिक-

शास्त्रदृष्टिसम्पादकमध्ययनमवश्यं विधेयमिति विद्यते सम्प्रदायोऽद्यापि प्राचीनायां संस्कृताध्ययनाध्यापनपरिपाट्याम्। सत्यवकाश एतदधिक-शास्त्राणामप्यध्ययनं विधीयेत केनापि कुशाग्रमतिमता, किन्तु नायं सार्वत्रिको नियमः। उक्तमत्र विषये सुश्रुते यथा—

एकं शास्त्रमधीयानो न विद्याच्छास्त्रनिश्चयम्।
तस्माद्बहुश्रुतः शास्त्रं विजानीयाच्चिकित्सकः॥

एतैः पदवाक्यप्रमाणपरैः शास्त्रैः शब्दतत्त्वमधिकृत्याऽऽविष्कृतेष्वभि-प्रायेषु यथा वैमत्यं तथा समन्वयोऽपि परिलक्ष्यते। तत्समन्वयाधारेणाऽऽलङ्कारिकैः शब्दतत्त्वसङ्कलन साहित्यशास्त्रे कृत्वोत्तरतनगुरुशिष्याणां कृते काव्यपठनपाठनयोर्महती पदवी निर्मिता। एतेषां व्याकरणमीमांसान्यायादीनां प्रतिशास्त्रं शब्दतत्त्वानि, तेषां तत्त्वानां पूर्वोत्तरभाव गौणप्रधानभावं चाधि-कृत्य तत्र तत्रोपलभ्यमानं ज्ञानव्यवस्थितिपदवाच्यं प्रयोगप्रमुखं पद्धतिविज्ञानं, तेषां सकलानामपि समन्वयसाधनानीत्यादयो विषया अत्र परिगणनार्हाः, तेषां तत्त्वानामालङ्कारिकैर्विहितः समन्वयोप्यत्र संलक्ष्यः। किन्तु प्रकृत-प्रबन्धभूरिविस्तरभिया तत्कर्मणोऽत्र विरम्यते। अपि च तेषां तत्त्वानां पठनपाठनोपयुक्ताः केचिदंशाः "Oriental Methodology of Education" इत्यस्मदीयाऽऽङ्ग्लभाषागतप्रबन्धे समुपन्यस्ता इत्यतः पुनरुक्तिदोषोऽप्यत्र परिवर्ज्यते। आङ्ग्लभाषाभिज्ञैरुपर्युल्लिखितशब्दतत्त्वानि तस्मिन्नाङ्ग्ल-भाषागतप्रबन्ध एव नयनविषयीकर्तव्यानि। अत्र तु सङ्क्षेपार्थं समुपन्यस्यन्ते प्राचीने काले विद्वत्संसद्भिर्निर्णीताः, गुरुमुखपरम्परामार्गेणऽऽयाताः, पदवाक्य-प्रमाणपरा अत एव शब्दतत्त्वमवलम्बमानाः, शास्त्रव्यवस्थितिपदवाच्या अत एव तन्त्रयुक्त्यपराभिधानाः, गीर्वाणवाङ्मये लेखसंनिविष्टाः सर्वव्यापिन्योऽर्थनिर्धारणरीतयो, या न केवलमायुर्वेदार्थनिर्णयेऽर्थशास्त्रार्थनिश्चये, अपि तु सर्वशास्त्रार्थनियोजने सामान्यतः साधनभूताः सत्यः पौरस्त्यानां पद्धति-विज्ञानस्य पूर्वतनं स्वरूपं सुविशद प्रदर्शयन्ति। परिकल्पनीयमत्र यद् व्याकरणमीमांसान्यायादिशास्त्राणां समुपन्यासोचिता भाषातत्त्वविषयिणः सिद्धान्ता एतास्वर्थनिर्धारणरीतिरूपासु तन्त्रयुक्तिषु गतार्था इति, यतः शब्दतत्त्वावलम्बिन्य शास्त्रनययुक्तय एवात्र समासेनोपनिबद्धाः सन्ति।

भाषातत्त्वस्वरूपं द्विविधम्। प्रथमं भाषायास्तत्त्वज्ञानं (Theory), द्वितीयं च तस्याः प्रयोगविज्ञानम् (Practice)। प्रयोगविज्ञानमेव पद्धतिशास्त्रस्वरूपेणावतीर्णं सदभिज्ञजनानां क्रियाकौशलं विविधैः प्रकारैरभिव्यनक्ति। आदौ भाषायास्तत्त्वज्ञाने, भाषोत्पत्तेर्भाषाया बहिराविष्कृतेश्चाऽऽध्यात्मिकं व्यापारमनुसृत्य मूलगामितत्त्वानां सङ्कलनं समावेशमर्हति। अनन्तरं भाषायाः प्रयोगविज्ञाने भाषातत्त्वज्ञानं तथोपयोक्तव्यं, यथा भाषाध्ययनाध्यापनक्रमो बालानां बोधसौकर्याय रुचये च भवेत्। भाषायास्तत्त्वज्ञानं यथा पौरस्त्यानामाद्यग्रन्थेषु तदुत्तरकालीनेषु व्याकरणमीमांसान्यायशास्त्रेषु च, तथा भाषायाः प्रयोगविज्ञानमादौ मौखिकाध्यापने तदनु चार्थविवृतिपरेषु टीकाग्रन्थेषु, पदमलभत। टीकाग्रन्थेष्वपि कदाचिदुभयोर्भाषातत्त्वज्ञान-प्रयोगविज्ञानयोः, कदाचिच्च प्रयोगविज्ञानमात्रस्योपन्यासः क्रियते। अतः प्रयोगविज्ञानप्रधानं टीकावाङ्मयमेव पौरस्त्यानां पद्धतिशास्त्रस्याध्यापनपद्धतीनां च मूर्तिमन्निदर्शनमिति निश्चेतुं शक्यम्। अत्रोपस्थाप्यमानासु तन्त्रयुक्तिषु तु भाषायास्तत्त्वज्ञानं स्वयमन्तर्हितं भवत्प्रयोगविज्ञानमेव विस्पष्टमग्रतो निदधाति। एतास्तन्त्रयुक्तयष्टीकाग्रन्थेष्वप्यर्थविवृत्यर्थे समाश्रिताः सन्ति। भाषायास्तत्त्वज्ञानस्य प्रयोगविज्ञानरूपेण विपरिणमनं, गवेषणापूर्वकं प्राचीनाध्यापनपद्धतेर्निवेदनं, तदुचित-भागस्याधुनिकाध्यापने हितकारि नियोजनमित्येव विद्यतेऽत्रास्मदीयं मुख्यं प्रयोजनम्। अतष्टीकाकृद्वचनैसार्धं तास्तन्त्रयुक्तयो गुरुशिष्यजनोपकृतयेऽत्रोदाह्रियन्ते। तन्त्रं नाम शास्त्रं प्रयोगविज्ञानं वा। तस्मिञ्छास्त्रे प्रयोगविज्ञाने वा या अर्थसाधनरीतयो युज्यन्ते तास्तन्त्रयुक्तयः शास्त्रभूषणानि भवन्ति। उक्तमभियुक्तैस्तासां तन्त्रयुक्तीनां सर्वव्यापित्वं, यथा—

तन्त्रे समासव्यासोक्त्या भवन्त्येता हि कृत्स्नशः।
एकदेशेन दृष्ट्या तु समासाभिहितं यथा॥
एकस्मिन्नपि यस्येह शास्त्रे लब्धा सदा मतिः।
स शास्त्रमन्यदप्याशु युक्तिं ज्ञात्वा प्रबुध्यते॥
अधीयानोऽपि शास्त्राणि तन्त्रयुक्त्यविचक्षणः।
नाधिगच्छति शास्त्रार्थानर्थान् भाग्यक्षये यथा॥

दुर्गृहीतं क्षिणोत्येव शास्त्रं शस्त्रमिवाबुधम्।
सुगृहीतं तदेव ज्ञं शास्त्रं शस्त्रं च रक्षति ॥

द्विविधं प्रयोजनं तासां तन्त्रयुक्तीनाम्। वाक्ययोजनमर्थयोजनं चेति। "वाक्यस्यासम्बद्धस्य योजनं सम्बन्धनं वाक्ययोजनम्"। "लीनस्यासङ्गतस्य चार्थस्य प्रकाशनं सङ्गतीकरणं चार्थयोजनम्"। एतदर्थाश्चात्र श्लोकाः सन्ति—

असद्वादिप्रयुक्तानां वाक्यानां प्रतिषेधनम्।
स्ववाक्यसिद्धिरपि च क्रियते तन्त्रयुक्तिभिः ॥
व्यक्ता नोक्तास्तु ये ह्यर्था लीना ये चाप्यनिर्मलाः।
लेशोक्ता ये च केचित्स्युस्तेषां चापि प्रसाधनम् ॥
यथाम्बुजवनस्यार्कः प्रदीपो वेश्मनो यथा।
प्रबोधस्य प्रकाशार्थं तथा तन्त्रस्य युक्तयः ॥

एतास्तन्त्रयुक्तयः सुश्रुतसंहितायां कौटिलीयर्थशास्त्रे च द्वात्रिंशत्सङ्ख्याकाः, चरकसंहितायां षट्त्रिंशत्सङ्ख्याकाः, अन्यत्र च चत्वारिंशत्सङ्ख्याकाः परिगणिताः। चरकसंहितायां तासामुद्देशो यथा—

तत्राधिकरणं योगो हेत्वर्थोऽर्थः पदस्य च।
प्रदेशोद्देशनिर्देशवाक्यशेषाः प्रयोजनम् ॥
उपदेशापदेशातिदेशार्थापत्तिनिर्णयाः।
प्रसङ्गैकान्तनैकान्ताः सापवर्गो विपर्ययः ॥
पूर्वपक्षविधानानुमतव्याख्यानसंशयाः।
अतीतानागतावेक्षा-स्वसंज्ञोह्यसमुच्चयाः ॥
निदर्शनं निर्वचनं सन्नियोगो विकल्पनम्।
प्रत्युच्चारस्तथोद्धारः सम्भवस्तन्त्रयुक्तयः ॥

अत्र योगोद्देशनिर्देशादीनां वाक्ययोजनं प्रयोजनं, अधिकरणपदार्थोह्यादीनामर्थयोजनं च प्रयोजनम्। एतासां तन्त्रयुक्तीनां सोदाहरणानि लक्षणानि, यथा—

## तन्त्रयुक्तयः।

१ अधिकरणम्—यमर्थमधिकृत्योच्यते (अपरेऽर्था अभिधीयन्ते) तदधिकरणम्।

२ योगः—येन वाक्यं युज्यते स (विपर्ययेणोक्तानां सन्निकृष्टपदानामेकीकरणं) योगः। वाक्ययोजना योगः (कौ. अ.)। दूरस्थानां व्यस्तानां वा पदानामेकीकरणं योगो योजना वा।

३ हेत्वर्थः—यदन्यदुक्तमन्यार्थसाधकमुभयार्थसाधकं वा भवति स हेत्वर्थः। हेतुरर्थसाधको हेत्वर्थः (कौटि. अर्थशास्त्रम् = कौ. अ.)।

४ पदार्थः—योऽर्थोऽभिहितः सूत्रे पदे वा स पदार्थः। पदस्य पदयोः पदानां वाऽर्थः पदार्थः। पद्यते गम्यते येन अर्थः इति सूत्रस्यापि पदत्वात्सूत्रे योऽर्थः प्रतिपादितः स पदार्थः। पदार्थस्त्वनेकस्तत्र योऽर्थः पूर्वापरयोगसिद्धः (पूर्वोक्तपरोक्तवाक्यसम्बन्धेनोपपन्नः) भवति सोऽर्थो ग्राह्यः। यथा-'वेदोत्पत्तिमध्यायं व्याख्यास्याम' इत्युक्ते सन्दिह्यते बुद्धिः—कतमस्य वेदस्यायमुत्पत्तिं विवक्षुरिति। यतः ऋग्वेदादयस्तु वेदाः। विद विचारणे विद्लृ लाभे इत्येतयोश्च धात्वोरनेकार्थयोः प्रयोगः। तत्र पूर्वापरयोगमुपलभ्य प्रतिपत्तिर्भवति 'आयुर्वेदोत्पत्तिमयं विवक्षुरिति एष पदार्थः'। पदावधिकः पदार्थः (कौ. अ.)।

५ (अ) प्रदेशः—प्रकृतस्यातिक्रान्तेन साधनं प्रदेशः। यद् बहुत्वादर्थस्य कार्त्स्न्येनाभिधातुमशक्यत्वादतिदेशेनाभिधीयते। अर्थानुपात्तैकदेशोऽयमुक्तः (चक्रपाणिः—चक्र.)। वक्तव्येन साधनं प्रदेशः (कौ. अ.)।

(आ) उपमानम्—दृष्टेनादृष्टस्य साधनमुपमानम् (कौ. अ.)।

६ उद्देशः—समासवचनं (संक्षेपेण भणनं) उद्देशः। यथा—सामान्यं च विशेषं च गुणान् द्रव्याणि कर्म च। समवायं च तज्ज्ञात्वा तन्त्रोक्तं विधिमास्थिताः। (गङ्गाधरः — गं.)। समासवाक्यमुद्देशः (कौ. अ.)।

७ निर्देशः—विस्तरवचनं निर्देशः। संक्षेपेणोक्तस्य विवरणं वा। (चक्र.)। व्यासवाक्यं निर्देशः (कौ. अ.)।

८ वाक्यशेषः—येन पदेनानुक्तेन वाक्यं परिसमाप्यते स वाक्यशेषः। यस्यार्थेन वाक्येषु यदगम्यमानतया पूर्तये पूरणं स वाक्यशेषः। यथा—प्रवृत्तिर्हेतुभावानामित्यत्र 'अस्ति' इति पदं पूर्यते। वाक्यवत् पदानि शेषाश्च क्रियन्ते येऽनिवेशिता अपि प्रतीयन्ते (चक्र.)। येन वाक्यं समाप्यते स वाक्यशेषः (कौ. अ.)।

* ९ प्रयोजनम्—यदर्थमारभ्यन्त आरम्भास्तत्प्रयोजनम् (गं.)। यदर्थं कामयमाना प्रवृत्तिस्तद् (चक्र.)।

१० उपदेशः— इदमेवं (कुर्यात्) इदं नैवमिति यदुच्यते।—तथा न जागृयाद्रात्रौ दिवा स्वप्नं च वर्जयेत्। उपदेशो नामाप्तानुशासनम्। अत्र प्रायिक उपदेशः। उपदेशो नियोगात् भिद्यते, यतो नियोगे व्यभिचारो नास्ति, अप्रायिकत्वादपरिहार्यत्वं विद्यते। यथा—पथ्यमेव भोक्तव्यमिति। एवं वर्तितव्यमित्युपदेशः (कौ. अ.)।

११ अपदेशः— अनेन कारणेनेदमिति (कार्यं प्रति हेतुकथनम्) अपदेशः। अपदेशो नाम यत् प्रतिज्ञातार्थसाधनाय हेतुवचनम्। तत्प्रतिज्ञातार्थस्य हेतुवचनं दुष्परिहरत्वादिति (चक्र.)। एवमसावाहेत्यपदेशः (कौ. अ.)।

१२ अतिदेशः— उक्तेन साधनमतिदेशः (कौ. अ.)। यत्प्रकृतस्यानागतेन (भविष्यता) साधनं अतिदेशः (गं.)। अतिदेशो नाम यत्किञ्चित्प्रकाश्यार्थमनुक्तार्थसाधनायैवमन्यदपि प्रत्येतव्यमिति परिभाष्यते। यथा—"यच्चान्यदपि किञ्चित्स्यादनुक्तमिह पूजितम्। पूर्णं तदपि वात्रेयः सदैवमनुमन्यते" (चक्र.)।

१३ अर्थापत्तिः—यत्र केनचिदर्थेनोक्तेन परस्यार्थस्यानुक्तस्य सिद्धिः (गं.)। अर्थापत्तिर्नाम यदकीर्तितम् (अप्रतिपादितम्) इति मत्वाऽर्थादापद्यते साऽर्थापत्तिः। यथा—'ओदनं भोक्ष्ये' इत्युक्तेऽर्थादापन्नं भवति—नायं पिपासुर्यवागूमिति। (चक्र.)। यदनुक्तमर्थादापद्यते सार्थापत्तिः (कौ. अ.)।

१४ निर्णयः (उत्तरपक्षः)— यत्पूर्वपक्षस्योत्तरवचनं स निर्णयः (गं.)। निर्णयो नाम विचारितस्यार्थस्य व्यवस्थापनम्। (चक्र.)। तस्य (पूर्वपक्षस्य) निर्णयनवाक्यमुत्तरपक्षो वा (कौ. अ.)।

१५ प्रसङ्गः— यत्प्रकारान्तरेण समापनं स प्रसङ्गः, यद्वा प्रकरणान्तरितो योऽर्थोऽसकृदुक्तः समाप्यते स प्रसङ्गः (गं.)। प्रसङ्गो नाम पूर्वाभिहितस्यार्थस्य प्रकरणगतत्वात्पुनरभिधानम् । (चक्र.) । प्रकरणान्तरेण समानोऽर्थः प्रसङ्गः ( कौ. अ. ) ।

१६ एकान्तः— सर्वत्र यदवधारणेन ( अविकल्पेन, नियमेन ) उच्यते स एकान्तः । उदाहरणेऽवधारणवाचिन एवकारस्य निर्देशात् । अवधारणं विधेयायोगव्यवच्छेदः । तथा च पार्थ एव सर्वोत्कृष्टधनुर्धर इति पार्थे सर्वोत्कृष्टधनुर्धरत्वायोगव्यवच्छेदेनैकान्तः । सर्वत्रायत्तमेकान्तः ( कौ. अ. ) ।

१७ नैकान्तः ( अनेकान्तः )—क्वचित्तथा क्वचिदन्यथेति यः सोऽनेकान्तः । क्वचित्सजातीये तथा क्वचिदन्यथेति । यथा—सन्ति ह्येके प्रत्यक्षपराः परोक्षत्वात् पुनर्भवस्य नास्तिक्यमाश्रिताः, सन्ति चापरे आगमप्रत्ययादेव पुनर्भवमिच्छन्तीति ( गं. )। नैकान्तः पुनरत्युग्रशब्दात् सर्वगो न चेदित्यादिनान्यतरपक्षावधारणम् ( चक्र. ) ।

१८ अपवर्गः—अभिप्लुतव्यपकर्षणमपवर्गः ( कौ. अ. ) । यदभिव्याप्यापकर्षणं सोऽपवर्गः ( गं. )। साकल्येनोद्दिष्टस्यैकदेशापकर्षणम् । गुणक्रियादिभिः सर्वतो वाऽभिव्याप्य कस्यचित्पदार्थस्य तेभ्यो गुणक्रियादिभ्यः पृथक्करणमपवर्गः । यथा—सर्वमम्लं पित्तकरमन्यत्र दाडिमामलकात् ।

१९ विपर्ययः—यद्यत्राभिहितं तस्य प्रातिलोम्यं ( विपरीतं ग्रहणम् ) विपर्ययः। विपर्ययेण विपरीतमेव गम्यते, अर्थापत्त्याऽविपरीत एव अर्थः प्रतीयत इत्यनयोर्भेदः । यथा—कृशाल्पप्राणभीरवो दुश्चिकित्स्या इत्युक्ते विपरीतं गृह्यते दृढादयः सुचिकित्स्या इति। प्रतिलोमेन साधनं विपर्ययः ( कौ. अ. ) ।

२० पूर्वपक्षः—आक्षेपपूर्वकः प्रश्नः पूर्वपक्षः ( गं. ) । पूर्वपक्षो नाम प्रतिज्ञातार्थवाक्यार्थसन्दूषकं वाक्यम् ( चक्र. )। प्रतिषेद्धव्यं वाक्यं पूर्वपक्षः ( कौ. अ. )।

२१ विधानम्—प्रकरणानुपूर्व्याऽभिहितं विधानम् ( गं. )। केचित्तु प्रकरणानुपूर्वार्थाभिधानं विधानमाहुः ( चक्र. )। शास्त्रस्य प्रकरणानुपूर्वी विधानम् ( कौ. अ. )।

२२ अनुमतम्–यत्परमतमप्रतिषिध्योच्यते तदनुमतम्। यथा–तत्रातीन्द्रियं पुनर्मनः सत्त्वसंज्ञकं चेत इत्याहुरेके (गं.)। अनुमतं नाम सह एकीयमतस्यानिवारणेनानुमननम् (चक्र.)। परवाक्यमप्रतिषिद्धमनुमतम्। (कौ. अ.)।

२३ व्याख्यानम्–अतिशयवर्णना व्याख्यानम् (कौ. अ.)। यदतिशयेन वर्णनं (ख्यापनं) तद् व्याख्यानम् (गं.)। व्याख्यानं नाम यत्सर्वबुद्धिविषयं व्याक्रियते, यथा–"प्रथमे मासि संमूर्च्छितः सर्वधातुकलुषीकृतः खेटभूतो भवत्यव्यक्तविग्रहः" इत्यादिना वाक्यस्य विदितार्थस्य व्याकरणम्।

२४ संशयः–उभयतो हेतुमानर्थः संशयः (कौ. अ.)। उभयहेतुदर्शनं संशयः। उभयोर्विसदृशयोरर्थयोर्हेतुस्तस्य दर्शनम्। यथा–इतश्च्युताः पुनर्भविष्यामो न वेति संशयः, कस्मात्? सन्ति ह्येके प्रत्यक्षपराः परोक्षत्वात् पुनर्भवस्य नास्तिक्यमाश्रिताः, सन्ति चापरे आगमप्रत्ययादेव पुनर्भवमिच्छन्तीति (गं.)। विशेषाकाङ्क्षावारितोभयविषयज्ञानं वा संशयः (चक्र.)। संशयो नाम सन्दिग्धेष्वर्थेष्वनिश्चयः (गं.)।

२५ अतीतावेक्षा (अतिक्रान्तावेक्षणम्)–यत्पूर्वमुक्तं तदतिक्रान्तस्यातीतस्य पुनरवेक्षणम्। पुरस्तादेवं विहितमित्यतिक्रान्तावेक्षणम् (कौ. अ.)।

२६ अनागतावेक्षा (अनागतावेक्षणम्)–यदेवं वक्ष्यतीत्यवेक्ष्यते तदनागतावेक्षणम् (गं.)। यदनागतं (भविष्यन्तं) विधिं प्रमाणीकृत्यार्थसाधनम् (कार्यार्थमवलोकनम्) (चक्र.)। पश्चादेवं विहितमित्यनागतावेक्षणम् (कौ. अ.)।

२७ स्वसंज्ञा–या न शास्त्रान्तरसामान्या सा स्वसंज्ञा (गं.)। सुश्रुते च–अन्यशास्त्रासामान्या स्वसंज्ञा। अन्यानि शास्त्राणि व्याकरणादीनि, तेषु असामान्या–असाधारणा, तत्राननुगता स्वशास्त्रेष्वेव प्रयोजनवतीत्यर्थः (डल्हणः– ड.)। या तन्त्रकारैर्व्यवहारार्थं संज्ञा क्रियते सा (चक्र.)। परैरसमितः शब्दः स्वसंज्ञा (कौ. अ.)।

२८ ऊह्यम्–यदनिर्दिष्टं बुद्धिमता बुद्ध्याऽवगम्यते तदूह्यम् (सुश्रुतम्–सु.)। ऊहो नाम पदनिबन्धग्रन्थे प्रज्ञया तर्क्यत्वेनोपदेश्यते, यथा–'यदुक्तमप्यनुक्तं सत् तदेत्यत्रापकर्षयेत्' इत्यादि (चक्र.)। बुद्धिगम्यमूह्यम् (ड.)। अनुक्तकरमूह्यम् (कौ. अ.)।

२९ समुच्चयः–यदिदं चेदं चेत्युच्यते स समुच्चयः (गं.)। यदादितदन्ते 'च' कृत्वा विधीयते, यथा–वर्णश्च स्वरश्चेत्यादि (चक्र.)। अनेन चानेन चेति समुच्चयः (कौ. अ.)।

३० निदर्शनम्–यत्र दृष्टान्तेनार्थप्रसाधनं तन्निदर्शनम्। सुश्रुते च-दृष्टान्तेनार्थः प्रसाध्यते यत्र तन्निदर्शनम्। अत एव च निदर्शनात् हेत्वर्थो भिद्यते, हेत्वर्थस्य दृष्टान्तमात्रत्वात् (गं.)। निदर्शनं नाम मूर्खविदुषां बुद्धिसाम्यविषयो दृष्टान्तः (चक्र.)। दृष्टान्तो दृष्टान्तयुक्तो निदर्शनम् (कौ. अ.)।

३१ निर्वचनम्– यन्निश्चितमुच्यते तन्निर्वचनम्। यथा–आयुर्वेदयतीति, आयुर्विद्यतेऽस्मिन्ननेन वा, आयुर्विन्दतीत्यायुर्वेद इति (गं.)। निर्वचनं नाम पण्डितबुद्धिगम्यो दृष्टान्तः, यथा 'ज्ञायते नित्यगस्यैव कालस्यात्ययकारणम्'। निदर्शननिर्वचनयोरयं विशेषो यत् निदर्शनं मूर्खविदुषां बुद्धिसाम्यविषयो दृष्टान्तः। निर्वचनं तु पण्डितबुद्धिवेद्यमेव। किं वा निर्वचनं निरुक्तिर्यथा–'विविधं सर्पति यतो विसर्पस्तेन संज्ञितः' इत्यादि (चक्र.)। गुणतः शब्दनिष्पत्तिर्निर्वचनम् (कौ. अ.)।

३२ सन्नियोगः (नियोगः)–यदिदमेव कार्यं, नेदं कार्यमित्येवं प्रेरणं नियोगः। यथा–मात्राशी स्यात्; यथा च देवगोब्राह्मणगुरुवृद्धसिद्धाचार्यानर्चयेदित्येवमादिः (गं.)। अवश्यानुष्ठेयतया विधानम् (चक्र.)। एवं नान्यथेति नियोगः (कौ. अ.)।

३३ विकल्पनं (विकल्पः)–यत्र वेति विशेषेण कल्प्यते तत्। यथा–मद्यमल्पं न वा पेयमथ वा सुबहूदकमिति। सुश्रुते च–इदं वेदं वेति विकल्पः (गं.)। प्रत्येकं वाशब्दोपादानमत्रोदाहरणे यत्र कृतं तदेकेनापि वाशब्देन बहुषु विकल्पतादर्शनार्थम्। क्वचिद्वाशब्दं विनाऽपि विकल्पो

भवति ( ड. )। विकल्पः पाक्षिकाभिधानम् ( चक्र. )। अनेन वानेन वेति विकल्पः ( कौ. अ. )।

*३४ प्रत्युच्चारः—यत्पूर्वमुच्चरितं पुनस्तथैवोच्चार्यते ( गं. )। प्रत्युच्चारो नाम परनिवारणम् ( चक्र. )।

*३५ उद्धारः—यदुपदिष्टार्थमनुसृत्योद्धार्यते ( गं. )। उद्धारो नाम परपक्षदूषणं दत्वा स्वपक्षोद्धारणं वा ( चक्र. )।

*३६ सम्भवः—यो यतः सम्भवति स तस्य सम्भवः। यथा—दोषा व्याधीनां सम्भवः ( गं. )। यद् यस्मिन् उपपद्यते स तस्य सम्भवो वा। यथा—मुखे व्यङ्गनीलिकादयः सम्भवन्तीत्यादि ( चक्र. )।

[ * एतच्चिह्नाङ्किता युक्तयः सुश्रुतसंहितायां कौटिलीयार्थशास्त्रे च न सन्ति। ]

"भट्टारहरिश्चन्द्रेण चतस्रस्तन्त्रयुक्तयः परिप्रश्नव्याकरणव्युत्क्रान्ताभिधानहेत्वाख्या व्याहृताः। ताश्चैतास्वेव (षट्त्रिंशत्स्वेव) अन्तर्भावनीयाः। तत्र परिप्रश्न उद्देशेऽन्तर्भवति, व्याकरणं तु व्याख्याने। व्युत्क्रान्ताभिधानं निर्देशभेदः। हेतुशब्देन यानि प्रत्यक्षादीनि प्रमाणानि [न्यायशास्त्रे] उक्तानि तानि हेतावन्तर्भवन्ति।" ( चक्र० )

एवं 'तन्त्र–( शास्त्र )–सारगवेषणे सम्यग्विनिहिताः', 'शब्दार्थन्यायसंयुताः', 'दीपीभूताः' तन्त्रयुक्तयः पदवाक्यप्रमाणजिज्ञासुभिर्विधिवद्वेदितव्याः। यद्यप्येताः सामान्यतो निखिलशास्त्रव्रातार्थनियोजनेऽतितरामुपयुक्तास्तथापि विशिष्टशास्त्रार्थावधारणे विशिष्टयुक्तीनामुपयोजनं मतिमद्योजकाधीनमेव। पुरातने काले यथा मौखिकाध्यापने, तथाऽर्थविवृतिपरे लिखिताध्यापनरूपे वा टीकावाङ्मयेऽप्येतासामुपयोजनं विशिष्टशास्त्रार्थविनिश्चयाय सङ्ख्यावद्भिरनुष्ठितपूर्वमेव। अतोऽधुनातनाध्यापनेऽप्यध्याप्यमानविशिष्टविषयसन्दर्भानुसारेणोपरितनतन्त्रयुक्तीनां यथासम्भवमुपयोजनं टीकावाङ्मयानुशीलनपूर्वकं विधेयमिति नैव पृथङ् निवेदनीयं प्रेक्षावज्जनेभ्यः। अनेनैवाभिप्रायेण सुश्रुते लिखितं, यथा—

सामान्यदर्शनेनासां व्यवस्था सम्प्रदर्शिता।
विशेषस्तु यथायोगमुपधार्यो विपश्चिता॥ इति।

इत्थं शक्तिग्रहोपायभूताया विवृतेः सुरभारतीवाङ्मयोदधौ महत्त्वं समवबुध्यैव तद्विषये विस्तरतो व्याख्यानमत्र विहितम्।

(८) सिद्धपदसांनिध्यम्—प्रसिद्धपदस्य सानिध्यमित्यष्टमः शक्तिग्रहोपायः। "प्रसिद्धपदस्य सानिध्यादपि शक्तिग्रहो यथा—'इह सहकारतरौ मधुरं पिको रौति' इत्यादौ पिकशब्दस्य मधुरादिप्रसिद्धपदसांनिध्यात् कोकिले शक्तिग्रहः" (सिद्धान्तमुक्तावलिः)। प्रसिद्धपदसानिध्यं सानिध्यमात्रात्किञ्चिद्भिद्यते, तथापि सांनिध्यपदोच्चारणेनात्र वाक्यान्वयसाधनभूतं संनिधि—तत्त्वं स्मृतिसरणिमायाति, संनिधिश्चात्र मीमांसकैकदेशिभिरभिहितान्वयवादिभिरुपदिष्टानामाकाङ्क्षा – योग्यता –संनिधीना वाक्यांशभूतपदान्वयोपयोगिनामुपलक्षणं भवति। आकाङ्क्षा–योग्यता–संनिधयश्च पुनः पदान्वयपुरस्सरं दण्डान्वयमुखेन, खण्डान्वयमुखेन वा वाक्यप्रकरणाद्यर्थमवगमयन्ति, ततो तात्पर्यवृत्त्या वाक्यमहावाक्यग्रन्थादिबोधाय क्रमशः सहायीभवन्तीति भाषातत्त्वान्यत्र सविशेष स्मृतौ संस्थाप्यानि।

## उपसंहारः।

एवमवस्थितमिदं प्रतीच्यदृष्ट्यवलम्ब्यपि प्राच्यभाषातत्त्वाधिष्ठितमभिनवं शक्तिग्रहोपायविवेचनम्। प्रतीच्यदृष्ट्यवलम्बस्तु प्राच्यप्रतीच्यभाषातत्त्वसमन्वयाय तदनन्तरं च भाषाध्ययनाध्यापनयोः प्रयोगविज्ञानसौकर्याय कृतः, न तु पाश्चात्यदृष्टेः श्रेयस्त्वसाधनायेति विज्ञातव्यं प्रेक्षावद्भिः। यतः कस्यचिद्वङ्गीयविदुषो वचनानुरोधतः—

पाश्चात्यविदुषां नाहमृणी तद्ग्रन्थकर्षणात्।
यदस्मत्प्राक्तनेभ्यस्तैर्गृहीतर्णं विशुध्यते॥

इति रीत्या प्राच्यतत्त्वान्येवास्माकं जीवातुभूतानि। अत्राष्टशक्तिग्रहोपायेषु व्याकरणव्यवहारविवृतयोऽन्येभ्यः शक्तिग्रहोपायेभ्यो विस्तृततरं विमर्शविषयं गताः, अधुनातनभाषाध्यापनेऽपि तत्तन्माहात्म्यस्य चिरस्थायित्वात्। आदौ तावद् व्याकरणं विस्तरेण विमर्शविषयीभूतम्। यद्यपि प्राच्यैर्व्याकरणं मुखत्वेनाङ्गीकृतं, तथापि गीर्वाणभाषापरिवृत्त्यनुरोधेन तस्मिन् सुबन्तकारकसमासादीनां प्राधान्यं कथमवतीर्णं, प्रकृतिप्रत्ययविच्छेदनपूर्विका

